कारकांशे च पाताले तुङ्गर्क्षे कोऽपि संस्थितः। हर्म्यमन्दिरसंयुक्तो ह्ययुक्तो बहुदीप्तिमान् ॥
कारकांशे च पाताले शनिराहुयुतेक्षिते । विप्रेच्छाटनपट्टीयुग् जायते मन्दिरं द्विज ॥
कारकांशे च पाताले कुजकेतुशनीक्षिते । ऐष्टिकं मन्दिरं तस्य जायते नात्र संशयः ॥
कारकांशे च पाताले गुरुयुक्तनिरीक्षिते । दारवं मन्दिरं तस्य जायते नात्र संशयः ॥
कारकांशे च पाताले रवियुक्तनिरीक्षिते । तृणवेष्टितसंयुक्तं जायते तस्य मन्दिरम् ॥

अथ कारकांशान्नवमभावफलमाह—

समे शुभदृग्योगाद् धर्मनित्यः सत्यवादी गुरुभक्तश्च ॥ ४८ ॥
अन्यथा पापैः ॥ ४९ ॥
शनिराहुभ्यां गुरुद्रोहः ॥ ५० ॥
रविगुरुभ्यां गुरावविश्वासः ॥ ५१ ॥

वि०—सम इति । समे=कारकांशान्नवमे, शुभदृग्योगात्=शुभग्रहदृष्टियोगात्, धर्मनित्यः=धर्मतत्परः, सत्यवादी=सत्यवक्ता, गुरुभक्तश्च=गुरुसेवकश्च भवति ।

पापैः=कारकांशान्नवमे पापग्रहदृग्योगैः, अन्यथा=पूर्वोक्ताद्विपरीतं स्यात्, अर्थात् धर्मानित्यः, असत्यवादी, गुरुभक्तिरहितश्च भवति ।

शनिराहुभ्यां=कारकांशान्नवमस्थाभ्यां शनिराहुभ्यां तद्दृग्भ्यां वा, गुरुद्रोहः=गुरुणा समं द्रोहकारको भवति ।

रविगुरुभ्यां=कारकांशान्नवमे गुरुसूर्यदृष्टियुताभ्यां, गुरौ अविश्वासः=गुरौ विश्वासरहितो भवति ॥ ४८–५१ ॥

भाषा—कारकांश से नवम स्थान में शुभ ग्रह की दृष्टि वा योग हो तो धर्म करने में तत्पर, सत्य बोलने वाला और गुरु में भक्ति करने वाला होता है ।

तथा कारकांश से नवम में पापग्रह की दृष्टि वा योग हो तो पूर्वोक्त फल के विपरीत फल समझना, अर्थात् धर्म करने में अतत्पर, असत्य बोलने वाला और गुरु में भक्ति नहीं करने वाला होता है ।

कारकांश से नवम स्थान में शनि, राहु की दृष्टि वा योग हो तो गुरु के साथ द्रोह करने वाला होता है ।

अगर कारकांश से नवम में रवि और बृहस्पति की दृष्टि वा योग हो तो गुरु में अविश्वास होता है ॥ ४८–५१ ॥

अत्र वृद्धाः—

कारकांशे च नवमे शुभखेटयुतेक्षिते । सत्यवादी गुरौ भक्तः स्वधर्मनिरतो भवेत् ॥

कारकांशे च नवमे पापग्रहयुतेक्षिते । स्वधर्मनिरतो बाल्ये मिथ्यावादी भवेद्द्विज ॥
कारकांशे च नवमे शनिराहुयुतेक्षिते । गुरुद्रोही भवेद्विप्र शास्त्रेषु विमुखो नरः ॥
कारकांशे च नवमे गुरुभानुयुतेक्षिते । तदापि च गुरुद्रोही गुरुवाक्यं न मन्यते ॥
कारकांशे च नवमे भृगुभौमयुतेक्षिते । षड्वर्गाधिकयोगे च मरणं पारदारिकः ॥
कारकांशे च नवमे क्षतयुतेक्षिते द्विज । परस्त्रीसंगमाद्बालो बन्धको भवति ध्रुवम् ॥
कारकांशे च नवमे गुरुयुक्तेक्षिते द्विज । स्त्रीलोलुपो भवेद्बालो विषयी नैव जायते ॥

भाषा—स्पष्ट है ।

अथ कारकांशान्नवमे भृग्वङ्गारकादिषड्वर्गफलमाह—

तत्र भृग्वङ्गारकवर्गे पारदारिकः ॥ ५२ ॥

दृग्योगाभ्यामधिकाभ्यामामरणम् ॥ ५३ ॥

केतुना प्रतिबन्धः ॥ ५४ ॥

गुरुणा स्त्रैणः ॥ ५५ ॥

राहुणाऽर्थनिवृत्तिः ॥ ५६ ॥

वि०—तत्रेति । तत्र = कारकांशान्नवमे, भृग्वङ्गारकवर्गे = शुक्रभौमान्यतरषड्वर्गे सति, पारदारिकः = परस्त्रीसक्तो भवति ।

दृग्योगाभ्यामधिकाभ्यां = कारकांशान्नवमे भौमशुक्रान्यतरषड्वर्गे सति षड्वर्गापेक्षयाऽधिकाभ्यां शुक्रभौमदृष्टियोगाभ्यां, आमरणं = मरणपर्यन्तं पारदारिको भवति ।

केतुना = कारकांशान्नवमे केतोर्दृष्टियोगाभ्यां, प्रतिबन्धः = आमरणं पारदारिकस्य निवृत्तिर्भवति ।

गुरुणा = कारकांशान्नवमे बृहस्पतिना युक्ते वा दृष्टे सति, स्त्रैणः = स्त्रीलोलो भवति ।

राहुणा = कारकांशान्नवमे राहुणा युक्ते वा दृष्टे, अर्थनिवृत्तिः = द्रव्यनाशो भवति ॥ ५२–५६ ॥

भाषा—जिसके कारकांश से नवम स्थान में शुक्र और मङ्गल का षड्वर्ग हो वह परस्त्री में निरत होता है ।

अगर कारकांश से नवम में शुक्र, मङ्गल का षड्वर्ग हो और उस पर शुक्र, मङ्गल की दृष्टि, योग भी हो तो मरण पर्यन्त परस्त्री में निरत होता है ।

अगर कारकांश से नवम में केतु की दृष्टि या योग हो तो उस का प्रतिबन्धक होता है, अर्थात् मरण पर्यन्त परस्त्री में आसक्त नहीं होता है ।

अगर कारकांश से नवम में बृहस्पति की दृष्टि या योग हो तो अपनी स्त्री में आसक्त होता है।

अगर कारकांश से नवम में राहु की दृष्टि या योग हो तो पर स्त्री के लिये धन का नाश करता है ॥ ५०-५६ ॥

अथ कारकांशात्सप्तमभावस्य फलमाह—

**लाभे चन्द्रगुरुभ्यां सुन्दरी ॥ ५७ ॥**

**राहुणा विधवा ॥ ५८ ॥**

***शनिना वयोऽधिका रोगिणी तपस्विनी वा ॥ ५९ ॥***

**कुजेन विकलाङ्गी ॥ ६० ॥**

**रविणा स्वकुले गुप्ता च ॥ ६१ ॥**

**बुधेन कलावती ॥ ६२ ॥**

वि०—लाभ इति । लाभे=यस्य कारकांशात्सप्तमे, चन्द्रगुरुभ्यां=चन्द्रगुर्वोर्दृग्योगे सति, सुन्दरी = तस्य सुन्दरी स्त्री भवति ।

राहुणा = कारकांशात्सप्तमे राहुणा दृग्योगे सति, विधवा=विधवया स्त्रिया सह सम्बन्धो भवति ।

शनिना = कारकांशात्सप्तमे शनैश्चरेण युक्ते वा दृष्टे सति, वयोऽधिका = स्वस्मादधिकवयस्का, वा रोगिणी=रोगयुक्ता, वा तपस्विनी=तपस्विनी स्त्री भवति ।

कुजेन=कारकांशात्सप्तमे मङ्गलेन युक्ते वा दृष्टे विकलाङ्गी=अलक्षणाङ्गी स्त्री भवति।

रविणा = कारकांशात्सप्तमे सूर्येण युक्ते वा दृष्टे, स्वकुले = निजकुले, गुप्ता = रक्षिता, चकाराद्विकलाङ्गी च स्त्री भवति ।

बुधेन=कारकांशात्सप्तमे बुधेन युक्ते वा दृष्टे, कलावती=गीतवाद्यादिकलासु निपुणा स्त्री भवति ॥ ५७-६२ ॥

भाषा—जिस के कारकांश से सप्तम में चन्द्रमा और बृहस्पति की दृष्टि या योग हो उस को स्त्री सुन्दरी होती है ।

जिस के कारकांश से सप्तम में राहु की दृष्टि या योग हो तो उस को विधवा स्त्री के साथ सम्बन्ध होता है ।

अगर कारकांश से सप्तम में शनि की दृष्टि या योग हो तो वयस में बड़ी या रोगिणी या तपस्विनी स्त्री होती है ।

कारकांश से सप्तम में मङ्गल की दृष्टि या योग हो तो कुलक्षण से युत अङ्ग वाली स्त्री होती है ।

कारकांश से सप्तम में रवि की दृष्टि, योग हो तो अपने कुल में रक्षिता और चकार से विकलाङ्गी भी होती है।

कारकांश से सप्तम में बुध की दृष्टि वा योग हो तो गीत, वाद्य आदि कलाओं में निपुण होती है ॥ ५७-६२ ॥

अत्र वृद्धाः—

कारकांशे च शून्यस्थे गुरुचन्द्रयुते द्विज । सुन्दरी गेहिनी तस्य पतिभक्तिपरायणा ॥
राहुणा विह्वला बाला जायते चाङ्गना द्विज । शनिना च वयोधिक्या रोगिणी वा तपस्विनी॥
सौमेन विकलाङ्गी च तथा कान्तात्यलक्षणा । रविणा स्वकुले गुप्ता आसक्ता परवेश्मनि ॥
बुधे कलावती ज्ञेया कलाभिज्ञा प्रजायते । शुक्रेण तद्वज्ज्ञेया च निर्विशंकं द्विजोत्तम ॥

अथ कारकांशाच्चतुर्थभावफलमाह—

चापे चन्द्रेणावृते देशे ॥ ६३ ॥

वि०—चाप इति । चापे=कारकांशाच्चतुर्थे, चन्द्रेण=सोमेन युक्ते वा दृष्टे सति, अनावृते देशे = अनाच्छादिते स्थाने स्त्रीसम्भोगकारको भवति ॥ ६३ ॥

भाषा—जिस के कारकांश से चतुर्थ स्थान में चन्द्रमा की दृष्टि वा योग हो तो विना पर्दे की जगह में स्त्री सम्भोग करने वाला होता है ॥ ६३ ॥

अथ कारकांशात्तृतीयस्थानस्य फलमाह—

कर्मणि पापे शूरः ॥ ६४ ॥

शुभे कातरः ॥ ६५ ॥

वि०—कर्मणीति । कर्मणि=कारकांशात्तृतीये, पापे = पापग्रहे सति, शूरः= वीरो भवति ।

शुभे = कारकांशात्तृतीये, शुभग्रहे, कातरः = भीरुर्भवति ॥ ६४-६५ ॥

भाषा—कारकांश से तृतीय स्थान में पाप ग्रह की दृष्टि या योग हो तो शूर होता है ।

कारकांश से तृतीय स्थान में शुभग्रह की दृष्टि वा योग हो तो भीरु होता है ॥६४-६५॥

अत्रवृद्धाः—

कारकांशे तृतीये च पापखेटयुतेक्षिते । स शूरो जायते बालो वीर्यवान्बहुविक्रमी ॥
कारकांशे तृतीयेऽपि शुभखेटयुतेक्षिते । जायते तरलहृदयः कातरोऽपि विशेषतः ॥
कारकांशे तृतीये च षष्ठे पापयुते क्षिते । कृषीकर्मरतो नित्यं जायते च न संशयः ॥

अथ कर्षकयोगमाह—

मृत्युचिन्तयोः पापे कर्षकः ॥ ६६ ॥

वि०—मृत्युचिन्तयोरिति । मृत्युचिन्तयोः=तृतीयषष्ठयोः, पापे=पापग्रहे सति, कर्षकः=कृषिकर्ता भवति ॥ ६६ ॥

भाषा—कारकांश से तृतीय और षष्ठ स्थान में पापग्रह हो तो खेती करने वाला होता है ॥ ६६ ॥

अथात्र विशेषमाह—

समे गुरौ विशेषेण ॥ ६७ ॥

वि०—सम इति । समे=कारकांशात्सप्तमे, गुरौ=बृहस्पतौ सति, विशेषेण कर्षकः=विशेषेण कृषिकर्ता भवति ॥ ६७ ॥

भाषा—कारकांश से सप्तम में बृहस्पति हो तो विशेष करके खेती करने वाला होता है ॥ ६७ ॥

अथ कारकांशाद्द्वादशभावस्य फलमाह—

उच्चे शुभे शुभलोकः ॥ ६८ ॥
केतौ कैवल्यम् ॥ ६९ ॥
क्रियचापयोर्विशेषेण ॥ ७० ॥
पापैरन्यथा ॥ ७१ ॥

वि०—उच्च इति । =कारकांशाद्द्वादशे, शुभे=शुभग्रहे सति, शुभलोकः=स्वर्गादिप्राप्तिर्भवति ।

केतौ=कारकांशाद्द्वादशे केतौ सति, कैवल्यं=मुक्तिः स्यात् ।

क्रियचापयोः=मीनकर्कयोः कारकांशाद्द्वादशस्थयोस्तत्रशुभे सति विशेषेण=विशेषेण मुक्तिः स्यात् ।

पापैः=कारकांशाद्द्वादशे पापग्रहैः, अन्यथा=न मुक्तिः नरकाद्यशुभलोकप्राप्तिरित्यर्थः ॥ ६८–७१ ॥

भाषा—कारकांश से द्वादश स्थान में शुभग्रह हो तो स्वर्गादि शुभ लोक की प्राप्ति होती है ।

कारकांश से द्वादश में केतु हो तो मुक्ति की प्राप्ति होती है ।

कारकांश से द्वादश में मीन या कर्क राशि पड़े तथा उस में शुभग्रह हो तो विशेष कर स्वर्गादि लोक की प्राप्ति होती है अर्थात् सायुज्यादि चतुर्विध मुक्तियों में सर्वश्रेष्ठ सायुज्य मुक्ति की प्राप्ति होती है ।

कारकांश से द्वादश में पापग्रह हो तो नरकादि की प्राप्ति होती है ॥ ६८–७१ ॥

अथ कारकांशाद्द्वादशभावनशाच्छिवभक्त्यादिफलमाह—

रविकेतुभ्यां शिवे भक्तिः ॥ ७२ ॥

चन्द्रेण गौर्याम् ॥ ७३ ॥

शुक्रेण लक्ष्म्याम् ॥ ७४ ॥

कुजेन स्कन्दे ॥ ७५ ॥

बुधशनिभ्यां विष्णौ ॥ ७६ ॥

गुरुणा साम्बशिवे ॥ ७७ ॥

राहुणा तामस्यां दुर्गायाञ्च ॥ ७८ ॥

केतुना गणेशे स्कन्दे च ॥ ७९ ॥

पापर्क्षे मन्दे क्षुद्रदेवतासु ॥ ८० ॥

शुक्रे च ॥ ८१ ॥

वि०—रविकेतुभ्यामिति । रविकेतुभ्यां = कारकांशाद्द्वादशे मिलिताभ्यां रविकेतुभ्यां स्थिताभ्यां, शिवे भक्तिः = महादेवे भक्तिः स्यात् ।

चन्द्रेण=कारकांशाद्द्वादशे सोमेन युक्ते, गौर्यां=पार्वत्यां भक्तिः स्यात् ।

शुक्रेण=कारकांशाद्द्वादशे शुक्रेण युक्ते, लक्ष्म्यां=पद्मायां भक्तिः स्यात् ।

कुजेन=कारकांशाद्द्वादशे मङ्गलेन युक्ते, स्कन्दे=कार्तिकेये भक्तिः स्यात् ।

बुधशनिभ्यां=कारकांशाद्द्वादशे बुधशनैश्चराभ्यां युक्ते, विष्णौ = नारायणे भक्तिः स्यात् ।

गुरुणा=कारकांशाद्द्वादशे बृहस्पतिना युक्ते, साम्बशिवे=पार्वत्या सह शिवे भक्तिः स्यात् ।

राहुणा=कारकांशाद्द्वादशे राहुणा युक्ते तामस्यां=भूतादिदेवतायां, दुर्गायाञ्च= भगवत्यां च भक्तिः स्यात् ।

केतुना = कारकांशाद्द्वादशे केतुना युक्ते, गणेशे=विघ्नेशे, स्कन्दे = कार्तिकेये च भक्तिः स्यात् ।

पापर्क्षे मन्दे च=कारकांशाद्द्वादशे पापराशौ तत्र शनैश्चरे च, क्षुद्रदेवतासु= कर्णपिशाचादिषु भक्तिः स्यात् ।

शुक्रे=कारकांशाद्द्वादशे शुक्रे सति, चकाराच्छुद्रदेवतासु भक्तिरेव स्यात् ॥ ७२-८१ ॥

भाषा—कारकांश से बारहवें स्थान में रवि और केतु हो तो शिव में भक्ति होती है ।

कारकांश से बारह वे स्थान में चन्द्रमा हो तो गौरी में भक्ति होती है।
कारकांश से बारह वे स्थान में शुक्र हो तो लक्ष्मी में भक्ति होती है।
कारकांश से बारह वे स्थान में मङ्गल हो तो कार्तिकेय में भक्ति होती है।
कारकांश से बारह वे स्थान में बुध और शनि हो तो विष्णु में भक्ति होती है।
कारकांश से बारह वे स्थान में बृहस्पति हो तो गौरी सहित शिव में भक्ति होती है।
कारकांश से बारह वे स्थान में राहु हो तो भूत आदि देवताओं में और दुर्गा में भक्ति होती है।
कारकांश से बारह वे स्थान में केतु हो तो गणेश और कार्तिकेय में भक्ति होती है।
कारकांश से द्वादश में पाप राशि पड़े तथा उस में शनि हो तो क्षुद्रदेवताओं में भक्ति होती है।
यदि उसी पाप राशि में शुक्र हो तो भी क्षुद्रदेवताओं में भक्ति होती है ॥७२-८१॥

अत्र वृद्धाः—

कारकांशे व्ययस्थाने उच्चस्थेऽपि शुभग्रहे। सद्गतिर्जायते तस्य शुभलोकमवाप्नुयात् ॥
कारकांशे व्यये केतौ शुभखेटैर्युतेक्षिते । तदापि जायते मुक्तिः सायुज्यपदमाप्नुयात्॥
केवलोऽपि व्यये केतुः पापग्रहयुतेक्षितः । न मुक्तिर्जायते तस्य शुभलोकं न पश्यति॥

रविणा संयुते केतौ कारकांशे व्ययस्थिते ।
गौर्यां भक्तिर्भवेत्तस्य शाक्तिको जायते नरः ॥

रविभक्तिर्भवेत्तस्य निर्विशंकं द्विजोत्तम। चन्द्रेण संयुते केतौ कारकांशे व्ययस्थिते ॥

शुक्रेण संयुते केतौ कारकांशे व्ययस्थिते ।
समुद्रतनयाभक्तिर्जायतेऽसौ समृद्धिमान् ॥
कुजेन स्कन्दभक्तो वा जायते द्विजसत्तम ।
वैष्णवो बुधशौरिभ्यां गुरुणा शिवभक्तिमान् ॥
गुरुणा तामसोदुर्गाभूतप्रेतादि सेवकृत् ।
हेरम्बभक्तः शिखिना स्कन्दभक्तोऽथवा भवेत् ॥

कारकांशे व्यये शौरिः पापराशौ यदा भवेत् । तदेव क्षुद्रदेवस्य भक्तिस्तस्य न संशयः॥

पापर्क्षेऽपि व्यये शुक्रस्तदापिक्षुद्रसेवकः ।

अथामात्यकारकात्-षष्ठे किं विचार्यमित्याह—

अमात्यदासे चैवम् ॥ ८२ ॥

वि०—अमात्येति। अमात्यकारकात्=आत्मकारकमहान्न्यूनांशग्रहात्, दासे= षष्ठस्थाने च, 'एवं=एवमेव भक्तिविचारो विधेयः ।

अर्थोयथात्मकारकाद्द्वादशे भक्तिविचारो विहितस्तथाऽमात्यकारकात्षष्ठेऽपि विचारो विधेयः ॥ ८२ ॥

भाषा—जिस तरह आत्मकारकांश से द्वादश स्थान में देवताओं की भक्ति का विचार किया गया है। उसी तरह अमात्यकारकांश से षष्ठ स्थान में विचार करना चाहिए।

जैसे—अमात्यकारकांश से षष्ठ स्थान में रवि और केतु हो तो शिव में भक्ति होती है।

चन्द्रमा हो तो गौरी में, शुक्र हो तो लक्ष्मी में, मङ्गल हो तो कार्तिकेय में, बुध और शनि हो तो विष्णु में, बृहस्पति हो तो पार्वती के साथ शिव में, राहु हो तो भूतादि देवताओं में तथा दुर्गा में, केतु हो तो गणेश और कार्तिकेय में भक्ति होती है।

अमात्यकारकांश से षष्ठ में पाप राशि पड़ तथा उस में शनि अथवा शुक्र हो तो क्षुद्र देवताओं में भक्ति होती है ॥ ८२ ॥

अथ मान्त्रिकयोगमाह—

**त्रिकोणे पापद्वये मान्त्रिकः ॥ ८३ ॥**

वि०—त्रिकोण इति। त्रिकोणे पापद्वये=आत्मकारकांशात्पञ्चमनवमयोः पापद्वये स्थिते सति, मान्त्रिकः = मन्त्रशास्त्रज्ञो भवति ॥ ८३ ॥

भाषा—आत्मकारकांश से पञ्चम और नवम में दो पाप ग्रह हों तो मन्त्र शास्त्र को जानने वाला होता है।

अथ निग्रहकानुग्राहकयोगावाह—

**पापदृष्टे निग्राहकः ॥ ८४ ॥**

**शुभदृष्टेऽनुग्राहकः ॥ ८५ ॥**

वि०—पापदृष्ट इति। पापदृष्टे=कारकांशात्त्रिकोणे पापद्वये पापग्रहालोकिते, निग्राहकः=निग्रहकर्ता भवति।

शुभदृष्टे=कारकांशात् त्रिकोणे पापद्वये शुभग्रहावलोकिते, अनुग्राहकः=अनुग्रहकर्ता भवति ॥ ८४–८५ ॥

भाषा—कारकांश से पञ्चम और नवम में दो पाप ग्रह हों उन पर पाप ग्रह की दृष्टि हो तो निग्रह करने वाला होता है।

कारकांश से पञ्चम और नवम में दो पापग्रह हों उन पर शुभ ग्रह की दृष्टि हो तो अनुग्रह करने वाला होता है ॥ ८४—८५ ॥

अथ रसवादिभिषग्-योगावाह—

**शुक्रेन्दौ शुक्रदृष्टे रसवादी ॥ ८६ ॥**

बुधदृष्टे भिषक् ॥ ८७ ॥

वि०—शुक्रेन्दाविति । शुक्रेन्दौ = शुक्रे कारकांशे इन्दौ चन्द्रे, शुक्रदृष्टे=शुक्रेणावलोकिते सति, रसवादी=रसायनशास्त्रवेत्ता भवति ।

बुधदृष्टे=कारकांशे इन्दौ बुधेन निरीक्षिते सति, भिषक्=वैद्यो भवति ॥८६-८७॥

भाषा—कारकांश में चन्द्रमा हो उस पर शुक्र की दृष्टि पड़े तो रसायन शास्त्र को जानने वाला होता है ।

कारकांश में चन्द्रमा हो उस पर बुध की दृष्टि पड़े तो वैद्य होता है ॥८६-८७॥

अथ पाण्डुश्वित्र्यादियोगत्रयमाह—

चापे चन्द्रे शुक्रदृष्टे पाण्डुश्वित्री ॥ ८८ ॥

कुजदृष्टे महारोगः ॥ ८९ ॥

केतुदृष्टे नीलकुष्ठम् ॥ ९० ॥

वि०—चाप इति । चापे=कारकांशाच्चतुर्थे, चन्द्रे=सोमे, शुक्रदृष्टे=शुक्रेणावलोकिते सति । पाण्डुश्वित्री=पाण्डुरोगी, श्वेतकुष्ठी च भवति ।

कुजदृष्टे=कारकांशाच्चतुर्थे चन्द्रे कुजेन दृष्टे, महारोग=कुष्ठी भवति ।

केतुदृष्टे=कारकांशाच्चतुर्थे चन्द्रे केतुना दृष्टे, नीलकुष्ठम्=नीलकुष्ठी भवति ।

भाषा—कारकांश से चतुर्थ स्थान में चन्द्रमा हो उस पर शुक्र की दृष्टि हो तो पाण्डुरोग वाला या श्वेत कुष्ट वाला होता है ।

कारकांश से चतुर्थ में चन्द्रमा हो उस पर मङ्गल की दृष्टि पड़े तो कुष्ठी होता है ।

कारकांश से चतुर्थ में चन्द्रमा हो उस पर केतु की दृष्टि पड़े तो नीलकुष्ठी होता है ।

अथ कारकांशाच्चतुर्थपञ्चमस्थानयशायोगानाह—

तत्र मृतौ वा कुजराहुभ्यां क्षयः ॥ ९१ ॥

चन्द्रदृष्टौ निश्चयेन ॥ ९२ ॥

बुजेन पिटकादिः ॥ ९३ ॥

केतुना ग्रहणी जलरोगो वा ॥ ९४ ॥

राहुगुलिकाभ्यां क्षुद्रविषाणि ॥ ९५ ॥

वि०—तत्रेति । तत्र=कारकांशाच्चतुर्थे, मृतौ=पञ्चमे वा, कुजराहुभ्यां=कुजराहोर्योगे सति, क्षय=क्षयरोगवान् भवति ।

चन्द्रदृष्टौ=कारकांशाच्चतुर्थे पञ्चमे वा स्थितयोः कुजराहोरुपरि, चन्द्रदृष्टौ=सोमदृष्टौ सत्यां, निश्चयेन=निश्चयेन क्षयरोगवान् भवति ।

कुजेन=कारकांशाच्चतुर्थे पञ्चमे वा कुजेन युक्ते सति, पिटकादिरोगी भवति ।

केतुना=कारकांशाच्चतुर्थे पञ्चमे वा केतुना युक्ते सति, ग्रहणी=संग्रहणी, जलरोगः = जलोदरादिरोगवान् भवति ।

राहुगुलिकाभ्यां=कारकांशाच्चतुर्थे पञ्चमे वा राहुगुलिकाभ्यां मिलिताभ्यां स्थिताभ्यां, क्षुद्रविषाणि = मूषिकादि विषाणि भवन्ति ॥ ९१–९५ ॥

भाषा—कारकांश से चतुर्थ या पञ्चम स्थान में मङ्गल और राहु हों तो क्षय रोग होता है।

कारकांश से चतुर्थ या पञ्चम में मङ्गल और राहु हों उन पर चन्द्रमा की दृष्टि हो तो निश्चय कर के क्षय रोग होता है।

कारकांश से चतुर्थ वा पञ्चम में केवल मङ्गल हो तो फोड़ा आदि रोग होता है।

कारकांश से चतुर्थ वा पञ्चम में केवल केतु हो तो संग्रहणी या जल रोग होता है।

कारकांश से चतुर्थ वा पञ्चम में राहु और गुलिक हो तो बिच्छू आदि के क्षुद्र विष से कष्ट होता है ॥ ९१–९६ ॥

अथ कारकांशाच्चतुर्थस्थानवशाद्योगानाह—

तत्र शनौ धानुष्कः ॥ ९६ ॥

केतुना घटिकायन्त्री ॥ ९७ ॥

बुधेन परमहंसो लगुडी वा ॥ ९८ ॥

राहुणा लोहयन्त्री ॥ ९९ ॥

रविणा खड्गी ॥ १०० ॥

कुजेन कुन्ती ॥ १०१ ॥

वि०—तत्र शनाविति । तत्रेति पदात्पञ्चमेति पदं निवृत्तम् ।

तत्र=कारकांशाच्चतुर्थे, शनौ=शनैश्चरे सति, धानुष्कः=धनुषि कुशलो भवति ।

केतुना=कारकांशाच्चतुर्थे केतुना युक्ते, घटिकायन्त्री=घटीयन्त्रनिर्माता भवति ।

बुधेन=कारकांशाच्चतुर्थे बुधेन युक्ते, परमहंसः, लगुण्डी=दण्डी वा भवति ।

राहुणा=कारकांशाच्चतुर्थे राहुणा युक्ते, लौहयन्त्री=लौहयन्त्रनिर्माता भवति ।

रविणा=कारकांशाच्चतुर्थे सूर्येण युक्ते, खड्गी=खड्गधारणकर्ता भवति ।

कुजेन=कारकांशाच्चतुर्थे मङ्गलेन युक्ते, कुन्ती=कुन्तधारी भवति ॥९६–१०१॥

भाषा—कारकांश से चतुर्थ स्थान में शनि हो तो धनुर्धारी होता है।

कारकांश से चतुर्थ स्थान में केतु हो तो घड़ी बनाने वाला होता है।

कारकांश से चतुर्थ स्थान में बुध पड़े तो परमहंस या दण्डी होता है ।
कारकांश से चतुर्थ स्थान में राहु हो तो लोहयन्त्र बनाने वाला होता है ।
कारकांश से चतुर्थ स्थान में रवि हो तो खड्ग धारण करने वाला होता है ।
कारकांश से चतुर्थ स्थान में मङ्गल हो तो माला रखने वाला होता है ॥९६-१०१॥

अथ कारकांशतत्पञ्चमस्थानद्वयवशाद्ग्रन्थकृदादियोगानाह—

मातापित्रोश्चन्द्रगुरुभ्यां ग्रन्थकृत् ॥ १०२ ॥
शुक्रेण किञ्चिदूनम् ॥ १०३ ॥
बुधेन ततोऽपि ॥ १०४ ॥
शुक्रेण कविर्वाग्मी काव्यज्ञश्च ॥ १०५ ॥
गुरुणा सर्वविद्वान्ग्रन्थिकश्च ॥ १०६ ॥
न वाग्मी ॥ १०७ ॥
विशिष्य वैयाकरणो वेदवेदान्तविच्च ॥ १०८ ॥
सभाजड़ः शनिना ॥ १०९ ॥
बुधेन मीमांसकः ॥ ११० ॥
कुजेन नैयायिकः ॥ १११ ॥
चन्द्रेण सांख्ययोगज्ञः साहित्यज्ञो गायकश्च ॥ ११२ ॥
रविणा वेदान्तज्ञो गीतज्ञश्च ॥ ११३ ॥
केतुना गणितज्ञः ॥ ११४ ॥
गुरुसम्बन्धेन सम्प्रदायसिद्धिः ॥ ११५ ॥

वि०—मातापित्रोरिति । मातापित्रोः=कारकांशात्प्रथमपञ्चमयोः कारकांशे पञ्चमे चेत्यर्थः, चन्द्रगुरुभ्यां=सोमबृहस्पतिभ्यां मिलिताभ्यां स्थिताभ्यां, ग्रन्थकृत्= ग्रन्थकर्ता भवति ।

शुक्रेण=कारकांशे तत्पञ्चमे वा चन्द्रशुक्राभ्यां युक्ते, किञ्चिदूनं=किञ्चिदूनं ग्रन्थकर्तृत्वं स्यात् । अत्र केवल शुक्रवशादग्रे फलस्य वक्ष्यमाणत्वाच्छुक्रेणेत्यस्य चन्द्र-शुक्राभ्यामिति सुधार्थः ।

बुधेन=कारकांशे तत्पञ्चमे वा बुधचन्द्राभ्यां युक्ते, ततोऽपि=तस्मादपि न्यूनो ग्रन्थकारः स्यात् । अत्रापि केवलबुधवशादग्रे फलस्य वक्ष्यमाणत्वात् बुधेनेत्यस्य बुधचन्द्राभ्यामिति समीचीनार्थः ।

शुक्रेण=कारकांशे तत्पञ्चमे वा केवल शुक्रेण युक्ते, कविः=काव्यकर्ता, वाग्मी वाचोयुक्तिः, काव्यज्ञश्च=काव्यज्ञाता च भवति।

गुरुणा=कारकांशे तत्पञ्चमे वा बृहस्पतिना युक्ते, सर्ववित्=सर्वज्ञः, ग्रन्थिकः=ग्रन्थकर्ता च भवति, परन्च न वाग्मी=वक्ता न भवति, तथा विशिष्य=विशेषेण, वैयाकरणः=व्याकरणशास्त्रज्ञाता, वेदवेदाङ्गविच्च=वेदवेदाङ्गज्ञाता च भवति।

शनिना=कारकांशे तत्पञ्चमे वा शनैश्चरेण युक्ते, सभाजडः=सभायां वक्ता न भवति।

बुधेन=कारकांशे तत्पञ्चमे वा बुधेन युक्ते, मीमांसकः=मीमांसाशास्त्रज्ञाता भवति।

कुजेन=कारकांशात्पञ्चमे कुजेन युक्ते, नैयायिकः=न्यायशास्त्रज्ञाता भवति।

चन्द्रेण=कारकांशे तत्पञ्चमे वा चन्द्रेण युक्ते, सांख्ययोगज्ञः=सांख्ययोगशास्त्रयोर्द्वयोरपि ज्ञाता भवति, तथा साहित्यज्ञः=साहित्यशास्त्रवेत्ता, गायकश्च=गानक्रियाज्ञाता च भवति।

रविणा=कारकांशे तत्पञ्चमे वा सूर्येण युक्ते; वेदान्तज्ञः=वेदान्तशास्त्रज्ञाता, गीतज्ञश्च=गीतशास्त्रज्ञाता च भवति।

केतुना=कारकांशे तत्पञ्चमे वा केतुना युक्ते, गणितज्ञः=गणितशास्त्रज्ञाता भवति।

गुरुसम्बन्धेन = सर्वेषां पूर्वोक्तानां योगानां बृहस्पतिसम्बन्धेन, सम्प्रदायसिद्धिः = तत्तद्विद्यासम्प्रदाये सिद्धिर्भवति ॥ १०२-११५ ॥

भाषा—कारकांश में वा कारकांश से पञ्चम में चन्द्रमा और बृहस्पति हों तो ग्रन्थ बनाने वाला होता है।

कारकांश में या उस से पञ्चम में चन्द्रमा और शुक्र हो तो पूर्वोक्त योग की अपेक्षा कुछ न्यून ग्रन्थ बनाने वाला होता है।

कारकांश में या उस से पञ्चम में चन्द्रमा और बुध हो तो उस से भी कुछ न्यून ग्रन्थ बनाने वाला होता है।

कारकांश में या उस से पञ्चम में केवल शुक्र हो तो कवि, वक्ता और काव्य को जानने वाला होता है।

कारकांश में या उस से पञ्चम में बृहस्पति हो तो सब विद्याओं को जानने वाला और ग्रन्थ बनाने वाला भी होता है, किन्तु वक्ता नहीं होता है, तथा विशेष कर व्याकरण और वेद, वेदान्त जानने वाला होता है।

कारकांश में या उस से पञ्चम में शनि हो तो सभा में मूक होता है।

कारकांश में या उस से पञ्चम में बुध हो तो मीमांसक होता है।
कारकांश में या उस से पञ्चम में मङ्गल हो तो नैयायिक होता है।
कारकांश में या उस से पञ्चम में केवल चन्द्रमा हो तो सांख्य, योग, साहित्य और गानविद्या जानने वाला होता है।
कारकांश में या उस से पञ्चम में केवल सूर्य हो तो वेदान्त और गान जानने वाला होता है।
कारकांश में या उस से पञ्चम में केतु हो तो गणित शास्त्र जानने वाला होता है।
पूर्वोक्त योगों में अगर बृहस्पति का सम्बन्ध हो तो उस उस विद्या के सम्प्रदाय में सिद्ध होता है॥ १०२-११६॥

अथ कारकांशाद्‌द्वितीये फलविचारव्यवस्थामाह—

भाग्ये चैवम्॥ ११६॥
सदा चैवमित्येके॥ ११७॥

वि०—भाग्य इति। भाग्ये=कारकांशाद्‌द्वितीये, चैवं=पूर्वोक्तफलवत्फलं ज्ञेयम्, अर्थाद्यथा कारकांशे तत्पञ्चमे वा विद्याप्राप्तिरूपफलविचारः कृतस्तथैव कारकांशाद्‌द्वितीयेऽपि विधेय इति।

सदा=कारकांशात्तृतीयेऽपि च, एवं=पूर्वोक्तवत्फलं ज्ञेयम्, इति एके=केचिदाचार्याः कथयन्ति॥ ११६-११७॥

भाषा—कारकांश में तथा उस से पञ्चम में जिस प्रकार फलादेश किया गया है, उसी प्रकार कारकांश से द्वितीय स्थान में भी फलादेश करना चाहिए।
किसी आचार्य का मत है कि कारकांश से तृतीय स्थान से भी उसी प्रकार फलादेश करना चाहिए॥ ११६-११७॥

अथ स्तब्धवाग्योगमाह—

भाग्ये केतौ पापदृष्टे स्तब्धवाक्॥ ११८॥

वि०—भाग्य इति। भाग्ये=कारकांशाद्‌द्वितीये केतौ, पापदृष्टे=पापग्रहनिरीक्षिते सति, स्तब्धवाक्=द्रागुत्तरदानासमर्थो भवति॥ ११८॥

भाषा—कारकांश से द्वितीय स्थान में केतु हो उस पर पाप ग्रह की दृष्टि हो तो वह शीघ्र बोलने में असमर्थ होता है॥ ११८॥

अथ केमद्रुमयोगमाह—

स्वपितृपदाद्‌ भाग्यरोगयोः पापसाम्ये केमद्रुमः॥ ११९॥
चन्द्रदृष्टो विशेषेण॥ १२०॥

वि०—स्वपितृपदादिति। स्वपितृपदात्=स्वः कारकांशः, पिता लग्नं, पदं जन्मलग्नपदं तेषां समाहारः स्वपितृपदं तस्मात् कारकजन्मलग्नः—जन्मलग्नपदात्, भाग्यरोगयोः = द्वितीयाष्टमस्थानयोः, पापसाम्ये = पापग्रहतुल्ये, केमद्रुमः=केमद्रुमनामा योगो भवति।

चन्द्रदृष्टे=चन्द्रेन दृष्टे सति, विशेषेण=पूर्णरूपेण केमद्रुमयोगो भवति ॥११९-१२०॥

भाषा—कारक से या जन्म लग्न से या जन्म लग्न पद से द्वितीय और अष्टम स्थान में पापग्रह बरा बर होतो केमद्रुम योग होता है।

कारक या जन्म लग्न या जन्म लग्न पद से द्वितीय और अष्टम में पापग्रह का तुल्यता हो उस पर चन्द्रमा की दृष्टि हो तो विशेष कर केमद्रुम योग होता है, अर्थात् पूर्ण केमद्रुम योग होता है ॥ ११९-१२० ॥

अत्र वृद्धाः—

लग्नाल्लग्नपदाद्वास्वात् पापौ स्वोहानिगौ यदि।
केवलौ सग्रहत्वेऽपि समसंख्यौ शुभाशुभौ॥
चन्द्रदृष्टो विशेषेण योगः केमद्रुमो मतः।

भाषा—स्पष्ट है।

अथ फलसमयमाह—

सर्वेषां चैव पाके ॥ १२१ ॥

वि०—सर्वेषामिति। सर्वेषां = अखिलानां ग्रहाणां राशीनां च, पाके=दशायामेव पूर्वोक्तानि फलानि भवति।

अथवा सर्वेषां=अखिलानां ग्रहराशीनां पाके=दशाप्रवेशकालेऽपि, पूर्वोक्तकेमद्रुयोगविचारः कार्यः ॥ १२१ ॥

भाषा—ऊपर बतलाया गया ग्रह और राशियों का फल अपनी अपनी दशा में होता है।

अथवा सब ग्रह और राशियों का दशारम्भ के समय में भी केमद्रुम योग का विचार करना चाहिये इस सूत्र का इस प्रकार दो सङ्गत अर्थ हो सकते हैं ॥१२१॥

इति महर्षिजैमिनिप्रणीतजैमिनीसूत्रटीकायां प्रथमाध्याये द्वितीयः पादः।

## अथ प्रथमाध्याये तृतीयः पादः।

तत्र पदमवलम्ब्य फलादेशः कार्य इत्युपदिशति—

**अथ पदम् ॥ १ ॥**

वि०—अथेति। अथ पूर्वोक्तादनन्तरम्, पदं="यावदीशाश्रयं पदमृक्षाणाम्" इति पूर्वप्रतिपादितं लग्नपदमवलम्ब्य फलं ज्ञेयमत्र, अस्मिन्नधिकारे लग्नपदमाश्रित्यैव फलं वाच्यमित्यर्थः।

भाषा—अब पदाधिकार कहते हैं, अर्थात् इस पाद में "यावदीशाश्रयं पदमृक्षाणाम्" इस सूत्र से पूर्व प्रतिपादित लग्नपद से फल समझना चाहिए।

अथ फलं कथयति, तत्र प्रथमं श्रीमदादियोगमाह—

**व्यये सग्रहे ग्रहदृष्टे श्रीमन्तः ॥ २ ॥**

**शुभैर्न्याय्योलाभः ॥ ३ ॥**

**पापैरमार्गेण ॥ ४ ॥**

**उच्चादिभिर्विशेषात् ॥ ५ ॥**

वि०—व्यय इति। व्यये=लग्नपदादेकादशे, सग्रहे=शुभेन पापेन वा केनचिद् ग्रहेण युक्ते, ग्रहदृष्टे=शुभपापग्रहाणां केनचिद् दृष्टे सति, श्रीमन्तः=धनवन्तः स्युः।

शुभैः=लग्नपदादेकादशे शुभग्रहैर्युतदृष्टे सति, न्याय्योलाभः=न्यायमार्गाल्लाभः स्यात्।

पापैः=लग्नपदादेकादशे पापग्रहैर्युतदृष्टे सति, अमार्गेण=कुत्सितवृत्त्या लाभः स्यात्।

उच्चादिभिः=लग्नपदादेकादशे-उच्चस्वराशिमूलत्रिकोणादिगतैर्ग्रहैः, विशेषात्=विशेषरूपेण लाभः स्यात् ॥ २-५ ॥

भाषा—लग्न पद से एकादश स्थान में किसी पापग्रह या शुभग्रह का योग या दृष्टि हो तो वह जातक धनवान् होता है।

लग्न पद से एकादश स्थान में शुभ ग्रह से युत या दृष्ट हो तो नीति मार्ग से धन का लाभ होता है।

लग्न पद से एकादश स्थान में पापग्रह से युत या दृष्ट हो तो कुत्सित वृत्ति से धन का लाभ होता है।

लग्न पद से एकादश स्थान में उच्च स्वराशि, मूलत्रिकोण आदि राशि के ग्रह हो तो विशेष कर लाभ होता है।

अत्र वृद्धाः—

आरूढाल्लाभभवनं ग्रहः पश्येत्तु न व्ययम् ।
यस्य जन्मनि सोऽपि स्यात् प्रबलो धनवानपि ॥
द्रष्टृग्रहाणां बाहुल्ये तदा द्रष्टरि तुङ्गगे । सार्गले चापि तत्रापि बह्वर्गलसमागमे ॥
शुभग्रहार्गले तत्र तत्राप्युच्चग्रहार्गले । सुखानि स्वामिना दृष्टे लग्नभाग्याधिपेन वा ॥
जातस्य पुंसः प्राबल्यं निर्दिशेदुत्तरोत्तरम् ।

लग्नारूढ स्थान से ग्यारहवे स्थान को ग्रह देखता और द्वादश स्थान को न देखता हो तो जातक अत्यन्त धनवान् होता है । अगर आरूढ स्थान से ग्यारहवें स्थान को देखने वाले बहुत ग्रह हों तो उस से भी ज्यादा धनवान् होता है । अगर द्रष्टा ग्रह उच्च का हो तो उस से भी धनवान् होता है । अगर देखने वाला ग्रह अर्गला सहित हो तो उस से भी धनी होता है । अगर देखने वाला ग्रह पर बहुत अर्गलाओं का संयोग हो तो उस से भी ज्यादा धनी होता है । अगर वह अर्गला शुभ ग्रह की हो तो उस से भी ज्यादा धनी होता है । और अगर वह अर्गला उच्च गत ग्रह की हो तो उस से भी ज्यादा धनी होता है ।

यह उत्तरोत्तर अत्यन्त धनवान् योग तभी होता है जब कि लग्नारूढ स्थान से बारहवे स्थान को कोई ग्रह न देखता हो ।

अथ लग्नपदाद्द्वादश स्थानफलं कथयति,

तत्र व्ययाधिक्ययोगमाह—

नीचे ग्रहद्वग्योगाद्व्ययाधिक्यम् ॥ ६ ॥

वि०—नीच इति । नीचे=लग्नपदाद् द्वादशे, ग्रहदृग्योगात्=शुभपापयोगात् शुभपापयोः केनचिद् दृष्टियोगाभ्यां, व्ययाधिक्यं=व्ययप्रचुरं स्यात् । अत्र विवेकः—लग्नपदाद्द्वादशे पापग्रहेण युतदृष्टे कुत्सितकार्ये व्ययः शुभग्रहेण युतदृष्टे शुभकार्ये व्ययः, मिश्रग्रहेण युतदृष्टे मिश्रकार्ये व्यय इति ।

भाषा—लग्न पद से द्वादश स्थान शुभ ग्रह या पाप ग्रह से युत या दृष्ट हो तो अधिक खर्च होता है । अर्थात् पापग्रह से युत या दृष्ट हो तो पापकार्य में शुभ ग्रह से युत या दृष्ट हो तो शुभ कार्य में, शुभ ग्रह और पाप ग्रह दोनों से युत या दृष्ट हो तो शुभकार्य और पापकार्य दोनों में व्यय होता है ॥

अथ कस्मादपव्ययमित्याह—

रविराहुशुक्रैर्नृपात् ॥ ७ ॥
चन्द्रदृष्टौ निश्चयेन ॥ ८ ॥

बुधेन ज्ञातितो विवादाद्वा ॥ ९ ॥ गुरुणा करमूलात् ॥ १० ॥
कुजशनिभ्यां भ्रातृमुखात् ॥ ११ ॥ एतैर्व्ययं एव लाभः ॥ १२ ॥

वि०—रविराहुशुक्रैरिति । रविराहुशुक्रैः=लग्नपदाद्द्वादशे सूर्यराहुसिते युते दृष्टे वा, नृपात्=राज्ञो व्ययो भवति ।

चन्द्रदृष्टौ=लग्नपदाद्द्वादशे सोमेन दृष्टौ, निश्चयेन=निश्चितरूपेण नृपाद्व्ययो भवति ।

बुधेन=लग्नपदाद्द्वादशे बुधेन दृष्टौ सति, ज्ञातिभ्यः=दायादेभ्यः, विवादाद्वा=कलहाद्वा व्यय, ज्ञातिनिमित्तात्कलहाद्वा व्यय इत्यर्थः ।

गुरुणा=लग्नपदाद्द्वादशे गुरुणा दृष्टौ, करमूलात्=करव्याजेन व्ययो भवति ।

कुजशनिभ्यां=लग्नपदाद्द्वादशे मङ्गलशनिभ्यां दृष्टौ, भ्रातृमुखात्=भ्रात्रादिद्वारा धनव्ययो भवति ।

एतैः=पूर्वोक्तैर्ग्रहैर्व्ययं, एव लाभः=लाभस्थैर्ग्रहैरेव लाभो भवति ।

भाषा—लग्न पद से द्वादश स्थान में रवि, राहु या शुक्र हो तो राजा के द्वारा खर्च होता है ।

लग्न पद से द्वादश स्थान में चन्द्रमा की दृष्टि पड़े तो निश्चय कर के राजा के द्वारा व्यय होता है ।

लग्न पद से द्वादश में बुध हो तो दायाद के द्वारा कलह से व्यय होता है ।

लग्न पद से द्वादश स्थानमें बृहस्पति हो तो अपने हाथ के द्वारा व्यय होता है ।

लग्न पद से द्वादश स्थान में मङ्गल और शनि हो तो भाई आदि के द्वारा व्यय होता है ।

इस तरह लग्न पद से द्वादश स्थान में जिन ग्रहों से जिन के द्वारा व्यय कहा गया है, एकादश में उन ग्रहों से उन्हीं के द्वारा लाभ कहना चाहिए ॥ ९-१२ ॥

अथोदरामययोगमाह—

लाभे राहुकेतुभ्यामुदररोगः ॥ १३ ॥

वि०—लाभ इति । लाभे=पदात्सप्तमे, राहुकेतुभ्यां=राहुणा केतुना वा युते, उदररोगः=उदरामयः स्यात् ॥ १३ ॥

भाषा—लग्न पद से सप्तम में राहु या केतु हो तो उदर रोग होता है ॥ १३ ॥

अथ वार्धक्यचिह्नयोगमाह—

तत्र केतुना झटिति ज्यानि लिङ्गानि ॥ १४ ॥

वि०—तत्रेति । तत्र=पदाद्द्वितीये, केतुना=केतुना युक्ते, झटिति=शीघ्रं, ज्यानि लिङ्गानि=वार्धक्यचिह्नानि भवन्ति ॥ १४ ॥

भाषा—पद से द्वितीय स्थान में केतु पड़े तो जल्दी ही ( थोड़ी अवस्था में ही ) बुढापे के चिह्न हो जाते हैं ॥ १४ ॥

अथ श्रीमद्योगमाह—

**चन्द्रगुरुशुक्रेषु श्रीमन्तः ॥ १५ ॥ उच्चेन वा ॥ १६ ॥**

वि०—चन्द्रगुरुशुक्रेष्विति । चन्द्रगुरुशुक्रेषु=पदाद् द्वितीये चन्द्रगुरुशुक्रेषु स्थितेषु, श्रीमन्त =नृपास्तत्समाना वा भवन्ति ।

वा=अथवा, उच्चेन=पदाद् द्वितीये उच्च गतेन शुभेन पापेन वा, श्रीमन्तो भवन्ति ॥ १५-१६ ॥

भाषा—पद से द्वितीय में चन्द्र, गुरु, शुक्र हों तो जातक श्रीमान् होता है । अथवा पद से द्वितीय में स्थित शुभ ग्रह या पाप ग्रह उच्च का हो तो भी श्रीमान् होता है ॥ १५-१६ ॥

अत्र वृद्धा —

आरूढात् षष्ठभे पापे चौर स्याच्छुभवर्जिते ।
आरूढाद्वापि सौम्ये तु सर्वदिश्यधिपो भवेत् ॥
सर्वज्ञस्तत्र जीवे स्यात्कविर्वादी च भार्गवे ।

भाषा—आरूढ स्थान से द्वितीय में पाप ग्रह हो और शुभ ग्रह नहीं हो तो चोर होता है । अगर आरूढ स्थान से द्वितीय में बुध हो तो सब दिशाओं का अधीश होता है । अगर बृहस्पति हो तो सर्वज्ञ होता है । अगर शुक्र हो तो कवि और वादी होता है ।

अथावशेषफलकथने किंचिदाह—

**स्वांशवदन्यत्प्रायेण ॥ १७ ॥**

वि०—स्वांशवदिति । अन्यत्=अनानुक्तफलं, स्वांशवत्=कारकांशवत् कारकांशप्रकरणे यथोक्तं फलं तद्वदत्रापि बोध्यम् ।

अत्र "प्रायेणे"त्युक्त्या पदाधिकारे कथितभावफलमपि क्वचित्स्वांशवत् भवति यथाविरुद्धम् ॥ १७ ॥

भाषा—अवशेष फल जिस प्रकार आत्मकारक के नवांश में कहा गया है, उसी प्रकार बहुधा कार्य रूपारूढ स्थान से समझना चाहिये । अर्थात् जिस २ प्रकार

आत्म कारक के नवांश से। जिस २ स्थान में जो २ फल कहा गया है। उसी प्रकार लग्नारूढ स्थान से उसी २ स्थान में उसी २ फल का विचार करना चाहिए।

यहाँ पर "प्रायेण" इस शब्द से बाधक के अभाव रहने पर स्वांशवत् फल समझना चाहिये अन्यथा नहीं यह स्पष्ट होता है ॥ १७ ॥

अथ पुनरनेकान् योगानाह—

**लाभपदे केन्द्रे त्रिकोणे वा श्रीमन्तः ॥ १८ ॥ अन्यथा दुःस्थे ॥ १९ ॥**
**केन्द्रत्रिकोणोपचयेषु द्वयोर्मैत्री ॥२०॥ रिपुरोगचिन्तासु वैरम् ॥२१॥**

वि—लाभपद इति। केन्द्रे त्रिकोणे = लग्नारूढात्केन्द्रे त्रिकोणे वा, लाभपदे = सप्तमभावपदे स्थिते सति, श्रीमन्त = लक्ष्मीवन्तो भवन्ति।

दुःस्थे = लग्नारूढात् सप्तमभावपदे षष्ठाष्टमव्ययस्थे सति, अन्यथा = दरिद्रा भवन्ति।

केन्द्रत्रिकोणोपचयेषु = लग्नपदात्सप्तमभावपदे त्रिकोणोपचयेषु षष्ठव्यतिरिक्तेषु स्थिते सति, द्वयोः = स्त्रीपुंसोर्मध्ये, मैत्री = मित्रता स्यात्।

रिपुरोगचिन्तासु = लग्नपदाद्द्वादशाष्टमषष्ठेषु स्थिते सप्तमभावपदे, वैरं = द्वयोर्निरन्तरं शत्रुता स्यात्। एवं लग्नपदात् तृतीयपञ्चमादिभावपदराशिवशात् भ्रात्रो: पितृपुत्रयोरन्ययोश्च मैत्री विचारो विधेयः ॥ १८–२१ ॥

भाषा—लग्नपद से केन्द्र ( १।४।७।१० ) त्रिकोण ( ९।५ ) में सप्तम भाव का पद हो तो जातक लक्ष्मीवान् होता है।

लग्नपद से सप्तम भाव का पद ( ६।८।१२ ) में पड़े तो जातक दरिद्र होता है।

लग्नपद से केन्द्र, त्रिकोण और षष्ठ रहित उपचय ( ३।१०।११ ) में सप्तम भाव का पद पड़े तो स्त्री पुरुष दोनों में मित्रता होती है।

अगर ( १२।८।६ ) इन स्थानों में से किसी स्थान में सप्तम भाव का पद पड़े तो स्त्री पुरुष, दोनों में शत्रुता होती है।

इसी तरह तृतीय पञ्चम भाव आदि के वश भाई भाई, पिता पुत्र, और अन्य में भी मैत्री तथा वैर समझना चाहिए ॥ १८–२१ ॥

अत्र वृद्धा —

लग्नारूढं दारपदे मिथः केन्द्रगतं यदि। त्रिलाभे वा त्रिकोणे वा सदा राजान्यथाऽधमः॥
एवं पुत्रादिभावानामपि पित्रादिमित्रता। जातकद्वयमालोक्य चिन्तनीयं विचक्षणैः ॥

भाषा—स्पष्ट है।

अथान्यानपि योगानाह—

**पत्नीलाभयोर्दृष्ट्या निराभासार्गलया ॥ २२ ॥**

वि०—पत्नीलाभयोरिति । पत्नीलाभयोः=लग्नपदतत्सप्तमयोः, निराभासार्गलया=निष्प्रतिबन्धार्गलयां, दिष्ट्या=भाग्यं भवति ( दिष्टया समुपजोषं चेत्यानन्दे—इत्यमरः )।

भाषा—लग्नपद और उस से सप्तम में अप्रतिबन्ध अर्गला पड़े तो जातक भाग्यवान् होता है ॥ २३ ॥

अत्र वृद्धाः—

यस्य पापः शुभोवापि ग्रहस्तिष्ठेच्छुभार्गले । तेन दृष्टेक्षितं लग्नं प्राबल्यायोपकल्पते॥
यदि पश्येद्ग्रहस्तत्र विपरीतार्गले स्थितः ।

भाषा—जिस जातक के जन्म पत्र में प्रतिबन्ध रहित अर्गला में शुभग्रह या पापग्रह स्थित हो और वही ग्रह आरूढलग्न को देखता हो तो भाग्य योग की प्रबलता होती है । अगर प्रतिबन्ध सहित अर्गला में ग्रह स्थित हो तो भाग्य योग की प्रबलता नहीं होती है ।

शुभार्गले धनसमृद्धिः ॥ २३ ॥

शुभार्गल इति । शुभार्गले=लग्नपदतत्सप्तमयोः शुभग्रहकृतार्गले प्रतिबन्धकयुतेऽपि, धनसमृद्धिः=धनवृद्धिःस्यात, अन्यथा धनवत्त्वमात्रमेव स्यात् ।

भाषा—लग्नपद और उस से सप्तम इन दोनों स्थानों में शुभग्रह कृत अर्गला प्रतिबन्धक युक्त भी हो तो धन की वृद्धि होती है। इस से यह सिद्ध होता है कि लग्नपद और उस से सप्तम में पापग्रह कृत अर्गला हो तो सामान्य रूप से धन होता है।

अथ राजयोगानाह—

जन्मकालघटिकास्वेकदृष्टासु राजानः ॥ २४ ॥

पत्नीलाभयोश्च राश्यंशकदृक्काणैर्वा ॥ २५ ॥

तेष्वेकस्मिन्न्यूने न्यूनम् ॥ २६ ॥ पद्मंशतो दृष्टापातश्च ॥ २७ ॥

वि०—जन्मकाल इति । जन्मकालघटिकासु=जन्मलग्न-होरालग्न-घटीलग्नेषु, एकदृष्टासु=केनचिदेकेन ग्रहेण दृष्टेषु, राजानः=भूपतयो भवन्ति ।

पत्नीलाभयोश्च=जन्मलग्न-होरालग्न-घटीलग्न-कुण्डलीषु लग्नसप्तमभावयोः, राश्यंशकदृक्काणैः=राश्यंशकदृक्काणैरेकग्रहदृष्टयोश्च राजानो भवन्ति ।

तेषु=जन्मलग्नहोरालग्नघटीलग्नेषु त्रिषु तेषु राश्यंशकदृक्काणेषु एकस्मिन्न्यूने, न्यूनं=राजयोगस्य न्यूनत्वं स्यात् ।

एवं = यथा जन्मकालघटिकासु एकस्थासु राजयोगस्तथैव, अंशतः, द्रेष्काणतश्च विचारः कार्यः।

भाषा—जन्मलग्न, होरालग्न, घटीलग्न ये तीनों किसी एक ग्रह से देखे जायें तो वह राजा होता है।

अथवा जन्मलग्न कुण्डली, होरालग्न कुण्डली, घटीलग्न कुण्डली इन तीनों कुण्डलियों में लग्न और सप्तम भाव पर राशि, नवांश और द्रेष्काण के वश एक ग्रह की दृष्टि से भी राजयोग होता है।

पूर्वोक्त जन्मलग्न कुण्डली, होरालग्न कुण्डली, घटीलग्न कुण्डली इन तीनों कुण्डलियों के राशि, अंश और द्रष्काण के वश लग्न और सप्तम पर एक ग्रह की भी दृष्टि हो तो राजयोग होता है।

अगर उन में एक भी न्यून हो तो राजयोग भी न्यून होता है। इसी तरह जन्मलग्न, होरालग्न, घटीलग्न तीनों लग्न की नवांश कुण्डली और द्रेष्काण कुण्डली से भी राजयोग का विचार करना चाहिए।

अत्र वृद्धाः—

विलग्नघटिकालग्नहोरालग्नानि पश्यति। उच्चग्रहे राजयोगो लग्नद्वयमथापि वा॥
राशेर्द्रेष्काणतोऽप्याथ राशेरंशादथापि वा। बहवः राशिद्रेष्काणाभ्यां लग्नदृष्टा तु योगदः॥

भाषा—जन्मलग्न, घटिलग्न, होरालग्न इन तीनों को उच्चस्थित एक ग्रह देखता हो तो राजयोग होता है। अथवा उक्त तीनों लग्न में किसी दो को उच्च स्थित ग्रह देखता हो तो राजयोग होता है। राशि, नवांश और द्रेष्काण इन तीनों के वश या राशि और नवांश के वश या राशि और द्रेष्काणके वश नाना प्रकार के राजयोग होते हैं।

अथ ग्रन्थान्तरादाकृष्य राजयोगानाह:—

नभश्चराः पञ्च निजोच्चसंस्था यस्य प्रसूतौ स [illegible] सार्वभौमः।

त्रयः स्वतुङ्गादिगताः स राजा राजात्मजात्यस्य सुतोऽत्र मन्त्री॥

भाषा-जिस जातक के पांच ग्रह उच्च के हों वह चक्रवर्ती राजा होता है। जिस के तीन ग्रह उच्च के हों तो भी वह मनुष्य राजा होता है। इस योग में राजा के घर में उत्पन्न लड़का ही राजा होता है, अगर राजवंश में उत्पन्न न हो तो वह मनुष्य मन्त्री होता है॥

अन्यच्च— स्वोच्चे मूर्तिगतेऽमृतांशुतनये मन्त्रे स्वर्क्षे शनौ।
चापे नाथविधेन्दुभार्गवयुते स्याज्जन्म भूमीपतेः॥

भाषा—अगर लग्न में उच्च का बुध हो, धनो शनि मकर राशि का हो बृहस्पति, चन्द्रमा और शुक्र मीन में हों तो जातक राजा होता है।

अन्यच्च— तुङ्गस्थितौ शुक्रबुधौ विलग्ने नक्रे च वक्रे धनुषीज्यचन्द्रौ।
प्रसूतिकाले कियतो भवेतामाखण्डलो भूमितलेऽपि संस्थः॥

भाषा—जिस के उच्च का बुध और शुक्र लग्न में हों, मङ्गल मकर का हो, बृहस्पति और चन्द्रमा धनु में हों तो वह मनुष्य पृथ्वीतल में इन्द्र के समान होता है॥

अन्यच्च— दिनाधिराजे मृगराजसंस्थे नक्रे सवक्रे कलशेऽर्कसूनौ।
पाठीरलग्ने शशिना समेते महीपतेर्जन्म महौजसः स्यात्॥

भाषा—अगर सिंह में रवि हो, मकर में मङ्गल हो, कुम्भ में शनि हो, मीन में चन्द्रमा हो तो जातक बड़े तेजस्वी राजा होता है।

अन्यच्च— कर्केऽर्कचन्द्रौ सुरराजमन्त्री शत्रुस्थितश्चापि बुधः स्वतुङ्गे।
कश्चिद्बली लग्नगतः स राजा राजाधिराजाभिधया समेतः॥

भाषा—जिस के कर्क राशि में सूर्य, चन्द्र, और बृहस्पति हों, बुध उच्च का होकर षष्ठ स्थान में हो, कोई बली ग्रह लग्न में हो तो वह मनुष्य राजाओं का भी राजा होता है॥

अन्यच्च— महीसुते मेषगते तनुस्थे बृहस्पतौ वा तनुगे स्वतुङ्गे।
योगद्वयेऽस्मिन् नृपतौ भवेतां जितारिपक्षौ नृपनीतिपक्षौ॥

भाषा—जिस के मेष राशि का मङ्गल लग्न में बैठा हो या बृहस्पति उच्च का होकर लग्न में बैठा हो तो वह राजा होता है, अपने शत्रुओं को जीतता है और राजनीति में चतुर होता है।

अन्यच्च— गुरुर्निजोच्चे यदि केन्द्रशाली राज्यालये दानवराजपूज्यः।
प्रसूतिकाले किल तस्य मुद्रा चतुः समुद्रावधि गामिनी स्यात्॥

भाषा—जिस के उच्च का बृहस्पति केन्द्र में बैठा हो, दशम स्थान में शुक्र हो उस राजा की मुद्रा चारों समुद्र पर्यन्त चलता है, अर्थात् चक्रवर्ती राजा होता है।

अन्यच्च— वाचस्पतिः स्वोच्चगतो विलग्ने मेषे दिनेशः शनिशुक्रसौम्याः।
लाभालयस्थाः किल भूमिपालं तं भूतलस्याभरणं गृणन्ति॥

भाषा—जिस के उच्च का बृहस्पति लग्न में बैठा हो, मेष राशि में सूर्य बैठा हो, लाभ स्थान में शनि, शुक्र और बुध बैठे हों तो वह भूतल में सर्वोपरि राजा होता है।

अन्वय— देवाचार्यदिनेश्वरौ क्रियगतौ मेषूरणे क्षोणिजः
पुण्ये भार्गवसौम्यशीतकिरणा यस्य प्रसूतौ स्थिताः ।
राजा स्यात्·························· ·················· ॥

भाषा—जिस के बृहस्पति और सूर्य मेष राशि का हो, दशम में मङ्गल हो, नवम स्थान में शुक्र, बुध और चन्द्रमा हों तो वह मनुष्य राजा होता है ।

अन्वय— मन्दो यदा नक्रविलग्नवर्ती मृगेन्द्रयुग्माजतुलाकुलीराः ।
स्वस्वामियुक्ता जनयन्ति नाथं पाथोनिधिप्रान्तमहीतलस्य ॥

भाषा—जिस के मकर राशि का शनि लग्न में हो, सिंह, मिथुन, मेष, तुला और कर्क राशियाँ अपने अपने स्वामियों से युक्त हों तो वह मनुष्य समुद्र पर्य्यन्त पृथ्वी का राजा होता है ।

अन्वय— मेषोदयेऽर्कश्च गुरुः कुलीरे तुलाधरे मन्दविधू भवेताम् ।
भवेन्नृपालोऽमलकीर्तिशाली भूपालमालापरिपालिताज्ञः ॥

भाषा—मेष का सूर्य लग्न में हो, कर्क राशि में बृहस्पति हो, शनैश्चर और चन्द्रमा तुला का हो तो वह मनुष्य इतना बड़ा राजा होता है कि अन्य राजा उस की आज्ञा को शिर से धारण करते हैं ।

अन्वय— द्वन्द्वे दैत्यगुरौ निशाकरसुते मूर्तौ स्वतुङ्गे स्थिते
नक्रे यमशनैश्चरे च शफरे चन्द्रामरेज्यौ स्थितौ ।
योगोऽयं प्रभवेत्प्रसूतिसमये यस्यावनीशो महान् ॥

भाषा—जिस के जन्मकाल में मिथुन का बृहस्पति हो, उच्च का बुध लग्न में बैठा हो, यमी शनैश्चर मकर राशि में हो, मीन में चन्द्रमा और बृहस्पति हो वह मनुष्य बड़ा भारी राजा होता है ।

अन्वय— पश्येन्मृगाङ्कात्मजमिन्द्रमन्त्री विचित्रसम्पन्नृपतिं करोति ।
नक्षत्रनाथोऽप्यधिमित्रभागे शुक्रेण दृष्टो नृपतिं करोति ॥

भाषा—जिस के जन्म कुण्डली में बुध को बृहस्पति देखे तो वह मनुष्य विचित्र सम्पत्ति वाला राजा होता है । चन्द्रमा अधिमित्र के घर में बैठा हो, शुक्र उस को देखता हो तो भी वह मनुष्य राजा होता है ॥

अन्वय— सिंहोदयेऽर्कस्त्वजगो मृगाङ्कः शनैश्चरः कुम्भधरे सुरेज्यः ।
धनुर्धरे चेन्मकरे महीजो राजाधिराजो मनुजो भवेत्सः ॥

भाषा—जिस के लग्न का रवि सिंह में हो, चन्द्रमा मेष में हो, शनि कुम्भ में हो बृहस्पति धनु में हो, मकर में मङ्गल हो तो वह राजा होता है ।

अन्यच्च—स्वोच्चे स्थितः सोमसुतः ससोमः कुर्यान्नरं मागधदेशराजम् ।
जन्माधिपो जन्मविलग्नपो वा केन्द्रे वली नीचकुलेऽपि भूपम् ॥
कुर्य्यादुदारं सुतरां पवित्रं किमत्र चित्रं क्षितिपालपुत्रम् ।

भाषा—जिस के जन्मकाल में उच्च का बुध चन्द्रमा के साथ बैठा हो वह मनुष्य मगध देश का राजा होता है । जिस के जन्म राशि का स्वामि अथवा जन्म लग्न का स्वामी वक्री होकर केन्द्र में हो तो नीच कुल में उत्पन्न मनुष्य भी उदार और पवित्र आचरण वाला राजा होता है। अगर राजपुत्र राजा हो तो इस में आश्चर्य की क्या बात ।

अन्यच्च—

मीने निशाकरः पूर्णः सर्वग्रहनिरीक्षितः । सार्वभौमं नरं कुर्य्यादिन्द्रतुल्यपराक्रमम् ॥

भाषा—जिस के जन्मकाल में मीन राशि का पूर्ण बली चन्द्रमा हो, शेष सब ग्रहों की उस पर दृष्टि हो तो वह मनुष्य सार्व भौम होता है और उस का पराक्रम इन्द्र के समान होता है ।

अन्यच्च—मेषे दिनेशः शशिना समेतो यस्य प्रसूतौ स तु भूपतिः स्यात् ।
स्वतुङ्गगेहायगतौ सितेज्यौ केन्द्रत्रिकोणे कुरुतश्च भूपम् ॥

भाषा—जिस के जन्मकाल में चन्द्रमा सहित सूर्य मेष में हो वह मनुष्य राजा होता है, जिस के शुक्र और बृहस्पति अपने अपने उच्च के होकर केन्द्र (१।४।७।१०) या त्रिकोण ( ५।९ ) में हो वह मनुष्य राजा होता है ।

अन्यच्च—कन्यालग्नगते बुधे च विबुधामात्ये च जायास्थिते ।
भौमार्कौ सहजेऽर्कजोऽरिभवनेऽम्बुस्थे भृगोर्नन्दने ।
राजा स्यात्.................................. ॥

भाषा—जिस के जन्मकाल में बुध कन्या लग्न में हो, बृहस्पति सप्तम में हो, मङ्गल और रवि तृतीय में हों, शनि छठे भवन में हो और शुक्र चतुर्थ में हो तो वह मनुष्य राजा है ॥

अन्यच्च—प्रसूतिकाले मदने धने च व्यये विलग्ने यदि सन्ति खेटाः ।
ते छत्रयोगं जनयन्ति तस्य प्राक् पुण्यपाकाभ्युदयो हि यस्य ॥

भाषा—जिस के जन्मकाल में सप्तम, द्वितीय, द्वादश और लग्न इन स्थानों में सब ग्रह हों तो उस को छत्र योग होता है, यह छत्र योग पूर्व जन्मार्जित पुण्य के बल से होता है ॥

अन्यच्च—मीनोदये दानवराजपूज्यश्चन्द्रामरेज्यौ भवने कुलीरे ।
मेषेऽर्कभौमौ नृपतिः किल स्यादाखण्डलेनापि तुलां प्रयाति ॥

भाषा—जिस के जन्मलग्न मीन में शुक्र बैठा हो, चन्द्रमा और बृहस्पति कर्क में हों, सूर्य और मङ्गल मेष में हों तो वह मनुष्य इन्द्र के समान राजा होता है।

अन्वय—एकोऽपि शस्तः शुभदः स्वतुङ्गे केन्द्रे पतङ्गो बलवान् प्रदृष्टः।
सुतस्थितेनामरपूजितेन चेन्मानवो मानवनायकः स्यात् ॥

भाषा—जिस के जन्मकाल में एक भी शुभग्रह उच्च का हो तथा केन्द्र में स्थित बलवान् सूर्य के ऊपर पञ्चम स्थान स्थित बृहस्पति की दृष्टि हो तो वह मनुष्य मनुष्यों के नायक ( राजा ) होता है ॥

अन्वय—छायासुतो नक्रविलग्नजातश्चास्ते प्रसूती यदि पुष्पवन्तौ।
लाभे कुजो ये भृगुजोऽष्टमस्थः स्याद्भूपतिर्भूपकुलप्रसूतः ॥

भाषा—जिस के जन्मकाल में मकर लग्न में शनैश्चर बैठा हो, सूर्य और चन्द्रमा सप्तम स्थान में हों, मङ्गल एकादश में हो और शुक्र अष्टम स्थान में हो तो राजा के वंश में उत्पन्न जातक राजा होता है ॥

अन्यच्च—

मृगराशिं परित्यज्य स्थितो लग्ने बृहस्पतिः। करोति पृथिवीनाथं मत्तेभपरिवारितम् ॥

भाषा—जिस के जन्मकाल में लग्न में मकर राशि को छोड़ कर अन्य किसी राशि में बृहस्पति बैठा हो तो वह मनुष्य राजा होता है। उस के दरवाजे पर बड़े बड़े मस्त हाथी बन्धे रहते हैं ॥

अन्वय—सुरासुरेज्यौ भवतश्चतुर्थेऽत्यर्थं समर्थं पृथिवीपतिं स्यात्।
कर्कस्थितो देवगुरुः सचन्द्रः काश्मीरदेशाधिपतिं करोति ॥

भाषा—जिस के जन्मकाल में शुक्र और बृहस्पति चतुर्थ में हों वह मनुष्य राजा होता है। अगर चन्द्रमा सहित बृहस्पति कर्क राशि का हो तो वह मनुष्य काश्मीर देश का राजा होता है ॥

अन्वय—सुरासुरेज्यस्थितदृष्टिरिन्दुः स्वोच्चे स्थितो भूमिपतिं करोति।
विलोकयन्तः परिपूर्णचन्द्रं शुक्रज्ञजीवा जनयन्ति भूपम् ॥

भाषा—जिस के जन्मकाल में चन्द्रमा उच्च का हो उस को बृहस्पति और शुक्र देखते हों तो राजा होता है। अगर पूर्ण चन्द्र को शुक्र, बुध और बृहस्पति देखते हों तो भी राजा होता है।

अन्वय—मेषे गतो मूर्तिगतः प्रसूतौ बृहस्पतिश्चास्तगतः कलावान्।
रसातले व्योमगतः सितश्चेन्महीपतिर्गीतदिगन्तकीर्तिः ॥

भाषा—जिस के जन्मकाल में मेष राशि का बृहस्पति लग्न में हो, चन्द्रमा सप्तम में हो चतुर्थ या दशम स्थान में शुक्र हो तो वह मनुष्य दिगन्त कीर्ति वाला राजा होता है ॥

अन्यच्च—गुरुः कुलीरोपगतः प्रसूतौ स्मराम्बुखस्था भृगुमन्दभौमाः ।
तद्यानकाले जलधेर्जलानि भेरीनिनादोच्छलनं प्रयान्ति ॥

भाषा—जिस के जन्मकाल में बृहस्पति कर्क का हो, शुक्र, शनि और मङ्गल क्रमशे सप्तम, चतुर्थ और दशम स्थान में हों तो उसके यात्रा समय में समुद्र के जल भी उछल उठते हैं ॥

अन्यच्च—वृषे शशी लग्नगतोम्बुसप्तखस्था रवीज्यार्कसुता भवन्ति ।
तद्दण्डयात्रासु रजोन्धकाराद्दिनेऽपि रात्रिः कुरुते प्रवेशम् ॥

भाषा—जिस के जन्मकाल में वृष का चन्द्रमा होकर लग्न में हो, चतुर्थ, सप्तम, दशम स्थानों में क्रमसे रवि, बृहस्पति, शनि हों तो वह राजा होता है। जब उस की सवारी निकलती है तब इतनी धूल उड़ती है कि दिन में भी रात्रि के समान अन्धकार हो जाता है ॥

अन्यच्च—गुर्विन्दुसौम्या स्फुजितश्च यस्य मूर्तित्रिधर्मायगता भवन्ति ।
मृगेऽर्कसूनुस्तनुगोऽत्र नूनमेकातपत्रा स भुनक्ति धात्रीम् ॥

भाषा—जिस मनुष्य के जन्म काल में बृहस्पति, चन्द्रमा, बुध और शुक्र क्रमशे लग्न, तृतीय, नवम और एकादश स्थान में हों, शनि लग्न में मकर राशि का हो तो वह मनुष्य चक्रवर्ती राजा होता है ॥

अन्यच्च—कलाकलापाधिकृताधिशीलो चन्द्रोभवेज्जन्मनि केन्द्रवर्ती ।
विहाय लग्नं कुरुते नृपालं लीलाविलासाकलितारिवृन्दम् ॥

भाषा—जिस के जन्म काल में बलवान् चन्द्रमा लग्न को छोड़ कर केन्द्र में हो वह मनुष्य राजा होता है, और शत्रुओं के समूह को जितता है ॥

अन्यच्च—केन्द्रगः सुरगुरुः सशशाङ्को यस्य जन्मनि च भार्गववदृः ।
भूपतिर्भवति सोऽतुलकीर्तिर्नीचगो यदि न कश्चिदिह स्यात् ॥

भाषा—जिस के जन्मकाल में चन्द्रमा सहित बृहस्पति केन्द्र में हो, उस के ऊपर शुक्र की दृष्टि हो, कोई ग्रह नीच का न हो तो वह मनुष्य अतुल कीर्ति वाला राजा होता है ॥

अन्यच्च—धनस्थिता सौम्यसितामरेज्या मन्दारचन्दा यदि सप्तमस्था ।
यस्य प्रसूतौ स तु भूपतिः स्यादरातिदन्तिक्षतिसिंह एव ॥

भाषा—जिस के जन्म काल में बुध, शुक्र और बृहस्पति धन स्थान में हों शनि, मङ्गल और चन्द्रमा सप्तम स्थान में हो वह मनुष्य राजा होता है, और शत्रु रूप हाथी को नाश करने में सिंह के समान होता है ॥

अन्यच्च—सिंहे कमलिनीभर्ता कुलीरस्थो निशापतिः ।
दृष्टौ द्वावपि जीवेन पार्थिवः कुरुतस्तदा ॥

भाषा—जिस के जन्मकाल में सिंह राशि में सूर्य हो, चन्द्रमा कर्क राशि का हो, इन दोनों के ऊपर बृहस्पति की दृष्टि होतो राजा होता है ।

अन्यच्च—बुधः कर्कटमारूढो वाक्पतिश्च धनुर्द्धरे ।
रविभूसुतदृष्टौ तौ कुरुतः पृथ्वीपतिम् ॥

भाषा—जिस के जन्मकाल में कर्क का बुध, धन का बृहस्पति हो, और इन दोनों के ऊपर सूर्य और मङ्गल की दृष्टि हो तो राजा होता है ॥

अन्यच्च—उदग्वशिष्ठो भृगुनश्च पश्चात् प्राग्वाक्पतिर्दक्षिणतस्त्वगस्त्यः ।
प्रसूतिकाले स भवेदिलाया नाथो हि पाथोनिधिमेखलायाः ॥

भाषा—जिस के जन्मकाल में उत्तर में वशिष्ठ हो पश्चिम में शुक्र हो, पूर्व में बृहस्पति हो और दक्षिण में अगस्त्य हो वह मनुष्य समुद्र पर्यन्त पृथ्वी का स्वामी होता है ।

अन्यच्च—लग्नं लग्नपतिर्बलान्वितवपुः केन्द्रत्रिकोणे स्थितः
पृच्छायानविवाहजन्मतिलके कुर्य्यान्नृपालं ध्रुवम् ।
सच्छीलं विभवान्वितं गतरुजं मुक्तातपत्रान्वितं
जातं निम्नकुलेऽपि भूतिसहितं शंसन्ति गर्गादयः ॥

भाषा—अगर लग्नेश बलवान् होकर केन्द्र या त्रिकोण या लाभ स्थान में बैठ कर लग्न को देखता हो तो प्रश्न, जन्म, विवाह, यात्रा अथवा राज तिलक में मनुष्य को राजा करता है । और वह मनुष्य अच्छे स्वभाव वाला, धन से युक्त, रोग से रहित, मोती के छत्र से युक्त होता है । यद्यपि नीच कुल में भी जन्म हो तथापि सम्पत्ति सहित होता है ।

अन्यच्च—लग्ने सौरिस्तथा चन्द्र त्रिकोणे जीवभास्करौ ।
कर्मस्थाने भवेद्भौमो राजयोगस्तदा भवेत् ॥

भाषा—जिस के जन्मकाल में लग्न में शनि और चन्द्रमा हो, त्रिकोण में बृहस्पति और सूर्य हो दशम में मङ्गल हो तो राजयोग होता है ॥

अन्यच्च—दृश्यते युज्यते वापि चन्द्रजेन बृहस्पतिः ।
शिरसा शासनं तस्य धारयन्ति महीभृतः ॥

भाषा—जिस के जन्मकाल में बृहस्पति, बुध से दृष्ट या युत हो उस की आज्ञा को राजा लोग शिर से धारण करते हैं ॥

अन्यच्च—भौमः पश्यति जीवं जीवेन निरीक्षितो महीसूनुः ।

मन्त्री परोपकारी देवैरपि सुपूजितो बालः ॥

भाषा—जिस के जन्म काल में मङ्गल बृहस्पति को देखे, मङ्गल पर बृहस्पति की दृष्टि हो तो वह मनुष्य मन्त्री परोपकारी और देवता से भी पूजित होता है ।

अन्यच्च—शफरी युगले चन्द्रः कर्कटे च बृहस्पतिः ।

शुक्रः कुम्भे भवेद्राजा गजवाजिसमृद्धिभाक् ॥

भाषा—जिस के जन्म काल में मीन अथवा मिथुन राशि में चन्द्रमा, कर्क में बृहस्पति और कुम्भ में शुक्र हो तो वह मनुष्य हाथी, घोड़ा और नाना प्रकार के धन से युक्त राजा होता है ॥

अन्यच्च—नीचस्थितो जन्मनि यो ग्रहः स्यात्तद्राशिनाथश्च तदुच्चनाथः ।

भवेत्त्रिकोणे यदि केन्द्रवर्ती राजा भवेद्धार्मिकचक्रवर्ती ॥

भाषा—जिस के जन्म काल में जो ग्रह नीच का हो उस राशि का जो स्वामी उस का जो उच्च स्थान उस उच्च का जो स्वामी हो वह अगर त्रिकोण अथवा केन्द्र में हो तो वह मनुष्य चक्रवर्ती राजा होता है ॥

अन्यच्च—मूर्तौ वा पञ्चमस्थाने यदा जीवो भवेत्तदा ।

दशमे चन्द्रमा वापि राज्याध्यक्षस्तदा भवेत् ॥

भाषा—जिस के जन्मकाल में लग्न अथवा पञ्चम स्थान में बृहस्पति हो दशम स्थान में चन्द्रमा हो तो वह मनुष्य राजा होता है ॥

अन्यच्च—एक एव ग्रहः स्वर्क्षे वर्गोत्तमगतो यदि ।

बलवान्मित्रसंदृष्टः करोति च महीपतिम् ॥

भाषा—जिस के जन्मकाल में एक भी ग्रह अपने घर का अथवा अपने वर्गोत्तम का हो तो वह मनुष्य राजा होता है ॥

अन्यच्च—केन्द्रे विलग्ननाथः स्थेयबली मानवाधिपं कुरुते ।

सर्वैर्गगनभ्रमणैर्दृष्टे लग्ने भवेन्महीपालः ॥

भाषा—जिस के जन्मकाल में लग्नेश बली होकर केन्द्र स्थान में बैठा हो वह मनुष्य राजा होता है । अगर सब ग्रह लग्न को देखते हों तो भी राजा होता है ।

अन्यच्च—मेषस्थौ भानुभौमौ वृषशशिगुरुजौ भौममन्दौ मृगस्थौ

कन्यायां रोहिणेशो रविशशिदमनः कर्कटे जीवचन्द्रौ ।

मीनस्थौ शुक्रजीवौ तुलशनिभृगुजौ मन्मथे राहुसौम्यौ

यो योगेष्वेषु जातः स भवति मनुजो भूमिपालो धनी वा ॥

भाषा—सूर्य और मङ्गल मेष में हों, वृष राशि में चन्द्रमा और शुक्र हों, मकर राशि में मङ्गल और शनि हों, कन्या में बुध और राहु हों, कर्क राशि में बृहस्पति और चन्द्रमा हों, मीन राशि में शुक्र और बृहस्पति हों, तुला राशि में शनि और शुक्र हों, मिथुन में राहु और बुध हों इन योगों में जो जातक पैदा लेता है वह राजा अथवा धनी होता है।

अन्यच्च-आकाशमन्दिरगतस्तनुपः स्वगेहे कुर्यान्नरं नृपतिवन्द्यवरैः सुसेव्यम् ॥

भाषा—जिस के जन्मकाल में लग्नेश दशम स्थान में अपने घर का हो उस मनुष्य की सेवा राजा लोग करते हैं॥

अन्यच्च—मर्त्यानां जन्मकाले विबुधपतिगुरुर्दानवेशस्य मन्त्री
स्वस्थौ मूलत्रिकोणे दिनकररहिते संयुते तुङ्गराशौ।
पुत्रे पाताललग्ने मनसिजनिलये धर्मकर्मायकोशे
ज्ञानामोदप्रयुक्तः स भवति मनुजो भूपमान्यो धनाढ्यः॥

भाषा—जिस के जन्मकाल में बृहस्पति और शुक्र अपने घर में हों, सूर्य रहित हों, उच्च राशि में हों, पञ्चम, चतुर्थ, प्रथम सप्तम, नवम, दशम, एकादश, द्वितीय स्थानों में हों तो राजमान्य धन से युक्त होता है।

अन्यदप्याह—

सुकृतनिलयनाथे केन्द्रगे जन्मलग्नात्प्रभवति यदि योगः सार्वभौमाभिधानः।
बहुतरगुणपूर्णो बुद्धिमान्दानशीलो भवति नृपतिवर्यो धार्मिको भूपभूपः॥

भाषा—जिस के जन्मकाल में भाग्य स्थान के स्वामी जन्म लग्न से केन्द्र स्थान में स्थित हो तो सार्व भौम राजा होता है। इस योग में उत्पन्न मनुष्य बहुत गुण से पूर्ण, बुद्धिमान्, दानी, धर्मात्मा, तथा राजाओं का भी राजा होता है।

अन्यच्च—चन्द्रो निशायां स्वसुहृन्नवांशे शुक्रेण दृष्टो नृपतिं करोति।
स्वांशेऽधिमित्रांशगतो यदि स्याज्जीवेन दृष्टः कुरुतेऽह्नि भूपम्॥

भाषा—जिस के जन्म समय रात्रि में हो चन्द्रमा अपने मित्र के नवांश में स्थित हो शुक्र की उस पर दृष्टि हो तो मनुष्य राजा होता है। अगर दिन में जन्म हो चन्द्रमा अपने नवांश या अधिमित्र के नवांश में हो उस पर बृहस्पति की दृष्टि हो तो भी राजा होता है।

अन्यच्च-जीवो बुधो भृगुसुतोऽथ निशाकरो वा धर्मे विशुद्धतनवः स्फुरदंशुजालाः।
मित्रैर्निरीक्षितयुता यदि सूतिकाले कुर्वन्ति देवसदृशं नृपतिं महान्तम्॥

भाषा—जिस के जन्मकाल में चेष्टा बल युक्त बृहस्पति, बुध, शुक्र और चन्द्रमा

धर्म स्थान में हों मित्र ग्रहों से दृष्ट अथवा युक्त हों तो वह मनुष्य बड़ा प्रतापी राजा होता है।

अन्यच्च—उपचयगृहसंस्थो जन्मतो यस्य चन्द्रः।
स भवति नरनाथः शक्रतुल्यो बलेन ॥

भाषा—जिस के जन्मकाल में चन्द्रमा उपचय गृह ( ३, ६, १०, ११ ) में स्थित हो वह मनुष्य राजा होता है, और बल में इन्द्र के समान होता है।

अन्यदप्याह—

गुरुसितबुधलग्ने सप्तमस्थेऽर्कपुत्रे वियति दिवसनाथे भोगिनां जन्म विद्यात्।

भाषा—जिसके बृहस्पति, शुक्र तथा बुध लग्न में, सप्तम स्थान में शनि और दशम स्थान में सूर्य हो तो भोग करने वाला होता है।

अन्यच्च—धने व्यये तथा लग्ने सप्तमे च यदा ग्रहाः।
छत्रयोगस्तदा ज्ञेयो वंश्यानां नायको भवेत् ॥

भाषा—अगर द्वितीय, द्वादश, लग्न और सप्तम इन चार स्थानों में सब ग्रह हों तो छत्र योग होता है, [redacted] योग में उत्पन्न मनुष्य अपने कुल में श्रेष्ठ होता है।

अन्यदप्याह—

यदि भवति च केन्द्री यामिनीनाथ एव प्रददति प्रियभार्यां पुत्रिणीं वा सुरूपाम्।
धनकनकसमृद्धिं माणिकं हीररत्नं रचयति मृगनाभेश्चन्दनैश्चर्चिताङ्गम् ॥

भाषा—अगर केवल एक चन्द्रमा केन्द्रवर्ती हो तो प्रिया, पुत्रवती और सुन्दर रूप वाली भार्या मिलती है। धन, सुवर्ण, मणि, हीरा, रत्नों की समृद्धि होती है सदा कस्तूरी मिश्रित चन्दन से शोभित शरीर रहता है।

अन्यच्च—स्वक्षेत्रस्थो यदा जीवो बुधः सौरिश्च चेद्भवेत्।
तस्य जातस्य दीर्घायुः सम्पदश्च पदे पदे ॥

भाषा—अगर बृहस्पति, बुध और शनैश्चर स्वक्षेत्रस्थ हों तो उस मनुष्य को दीर्घायु कहना चाहिए, और पद पद में सम्पत्ति मिलती है।

अन्यच्च—केन्द्रत्रिकोणेषु भवन्ति सौम्या दुश्चिक्यलाभारिगताश्च पापाः।
यस्य प्रयाणेऽप्यथ जन्मकाले ध्रुवं भवेत्तस्य महीपतित्वम् ॥

भाषा—जिस के जन्मकाल या यात्रा के समय में केन्द्र अथवा त्रिकोण में शुभ ग्रह हों, ३, ६, ११ इन स्थानों में पाप ग्रह हों उस को अवश्य राज्य मिलता है।

अन्यच्च—मीने बृहस्पतिः शुक्रश्चन्द्रमाश्च यदा भवेत्।
तस्य जातस्य राज्यं स्यात् पत्नी च बहुपुत्रिणी ॥

ध्यर्कपापयोगे=रविभिन्नपापयोगे सति, न=पूर्वोक्तं फलं न भवति । अत्र रवेः पापग्रहाणां मध्येऽस्वीकारात्तद्योगेऽपि फलभङ्गो न भवतीत्यर्थः ॥ ३५-३९ ॥

भाषा—लग्न और सप्तम स्थान से जो अष्टम स्थान के स्वामी हों, उन दोनों में जो बली हो वह रुद्र ग्रह कहलाता है।

उक्त दोनों अष्टमेशों में दुर्बल भी पाप ग्रह से देखा जाता हो तो रुद्र ग्रह कहलाता है। यथाबल रुद्रग्रह शुभ दृष्ट हो तो शूल पर्य्यन्त आयु होती है। अर्थात् अल्पायु हो तो प्रथम शूल पर्य्यन्त, मध्यायु हो तो द्वितीय शूल पर्य्यन्त और दीर्घायु हो तो तृतीय शूल पर्य्यन्त आयु होती है। प्रथम आदि शूल विभाग इस तरह समझना चाहिए, जैसे प्रथम दशाप्रद राशि से चतुर्थ पर्य्यन्त प्रथम शूल, पञ्चम से अष्टम पर्य्यन्त द्वितीय शूल, नवम से द्वादश पर्य्यन्त तृतीय शूल जानना चाहिए।

पूर्वोक्त योग में शुभग्रह का योग रहने पर भी शूल पर्य्यन्त आयु होती है।

अगर रवि के भिन्न पापग्रह का योग हो तो पूर्वोक्त फल नहीं होता है। यहाँ रवि को पापग्रह नहीं मानते अतः रवि के योग रहने पर उक्त फल होता ही है ३५-३९

अथ पूर्वोक्तशूलान्तमायुषि विशेषमाह—

**मन्दारेन्दुदृष्टे शुभयोगाभावे, पापयोगेऽपि वा शुभदृष्टौ परतः ॥४०॥**

वि०—मन्दारेन्दुदृष्ट इति। मन्दारेन्दुदृष्टे=शनिकुजचन्द्रदृष्टे, शुभयोगाभावे=शुभयोगरहिते रुद्रे सतीत्येको योगः। वा पापयोगे=मन्दारेन्दुदृष्टे रुद्रे पापयोगे सति द्वितीयः, वा शुभदृष्टौ=मन्दारेन्दुदृष्टे रुद्रे शुभदृष्टौ सत्यामिति तृतीयः, एतद्योगत्रये परतः=प्राप्तशूलात्परत आयुरवसानं भवति ॥ ४० ॥

भाषा—यदि रुद्र ग्रह के ऊपर शनि, मङ्गल और चन्द्रमा की दृष्टि हो और शुभग्रह से वियुत हो तो एक योग।

वा रुद्रग्रह के ऊपर शनि, मङ्गल और चन्द्रमा की दृष्टि हो और पापग्रह का योग हो तो द्वितीय योग।

वा रुद्र ग्रह के ऊपर शनि, मङ्गल और चन्द्रमा की दृष्टि हो और शुभ ग्रह से देखा जाता हो तो तृतीय योग।

इन तीनों योगों में पूर्व कथित रीति से प्राप्त शूल से अग्रिम शूल में निधन होता है ॥ ४० ॥

अत्र शुभ पापग्रहनिर्णयमाह वृद्धः—

अर्कारमन्दफणिनः क्रमात् क्रूरा यथाक्रमम् । चन्द्रोऽपि क्रूर एवात्र कश्चिद्वारकाश्रये ॥
गुरुध्वजशुक्रवयः स्युर्यथापूर्वं शुभग्रहाः । प्रत्येकं शुभराशिस्थ उच्चस्थो वा बुधः शुभः ॥

भाषा—सूर्य, मङ्गल, शनि और राहु क्रम से पाप ग्रह हैं, अर्थात् समान रूप से

सूर्य पाप ग्रह उस से अधिक मङ्गल मङ्गल से अधिक शनि और शनि से अधिक राहु पाप ग्रह है। कहीं मङ्गल के आश्रय होने पर चन्द्रमा भी पाप ग्रह होता है। तथा बृहस्पति, केतु, शुक्र और बुध यथा पूर्व शुभग्रह होते हैं। जैसे सामन्य रूप से बुध शुभग्रह उस से अधिक शुक्र, शुक्र से अधिक केतु और केतु से अधिक बृहस्पति शुभग्रह है। शुभग्रह की राशि या अपने उच्च में स्थित बुध शुभ है अन्यथा अशुभ है।

अथ शूलेऽपि कदा मरणमित्याह—

**शूले चेत्तदन्तशूले ॥ ४१ ॥**

वि०—शूल इति। शूले चेत्=शूले चेन्मृतिः तदा तदन्तशूले=प्राप्तशूलावसानराशिदशायां निधनं स्यात् ॥ ४१ ॥

भाषा—प्राप्त शूल में भी कब मरण होगा इस का निश्चय करते हैं कि प्राप्त शूल में भी अन्तिम राशि की दशा में मरण होता है ॥ ४१ ॥

अथ पुनर्निधनयोगमाह—

**रुद्राश्रयेऽपि प्रायेण ॥ ४२ ॥ क्रिये पितरि विशेषेण ॥ ४३ ॥**

**रन्ध्रे रुद्रे तदन्तं प्रायः॥४४॥ प्रथममध्यमोत्तमेषु वा तत्तदायुषाम्॥४५॥**

वि०—रुद्राश्रय इति। प्रायेण=बाहुल्येन, रुद्राश्रयेऽपि=रुद्राश्रितराशिदशाया मन्तर्दशायां वा, निधनं भवति।

क्रिये=मीने, पितरि=लग्नस्थे, विशेषेण=विशेषेण रुद्राश्रितराशिदशान्तर्दशायां निधनं भवति।

रुद्रे=रुद्रग्रहे, रन्ध्रे=अष्टमभावस्थे, प्रायः तदन्तं=प्रायः रुद्रग्रहाश्रितराशिदशायां मरणं भवति। वा तत्तदायुषां=अल्पमध्यदीर्घायुषां, प्रथममध्यमोत्तमेषु = प्रथममध्यमोत्तमेषु शूलेषु निधनं भवति ॥ ४२–४५ ॥

भाषा—बहुधा रुद्राश्रित राशि की दशा अन्तर्दशा में भी मरण होता है।

यदि मीन राशि लग्न में हो तो विशेष कर के रुद्राश्रित राशि की दशा अन्तर्दशा में मरण होता है।

यदि लग्न से अष्टम स्थान में रुद्र ग्रह बैठा हो तो प्रायः रुद्र ग्रहाश्रित राशि की दशा में मरण होता है।

अल्पायु, मध्यायु और दीर्घायु इन तीनों योगों में क्रम से प्रथम, द्वितीय और तृतीय शूल में मरण होता है ॥ ४२–४५ ॥

अत्र वृद्धः—

रुद्रयोः पापमात्रत्वे प्रथमर्क्षे मृतिर्भवेत्। मिश्रत्वे मध्यशूलर्क्षे शुभत्वे चान्त्यभे मृतिः ॥

भाषा—पूर्वोक्त दोनों प्रकार के रुद्र ग्रह पापग्रह हों तो प्रथम शूल में मरण होता है। दोनों में एक शुभ ग्रह और दूसरा पाप ग्रह हो तो द्वितीय शूल में मरण होता है। यदि दोनों शुभ ग्रह हों तो अन्त शूल में मरण होता है।

अथ प्रकारान्तरेणायुर्योगनिर्णयाय महेश्वरग्रहमाह—

स्वभावेशो महेश्वरः ॥४६॥ स्वोच्चे स्वभे रिपुभावेशप्राणी ॥४७॥
पाताभ्यां योगे स्वस्य तयोर्वा योगे ततः ॥ ४८ ॥

वि०—स्वभावेश इति । स्वभावेशः=आत्मकारकादष्टमेशः, महेश्वरः = महेश्वरग्रहो भवति ।

स्वोच्चे=निजोच्चे, स्वराशौ=स्वर्क्षे, स्थिते आत्मकारके, रिपुभावेशप्राणी= द्वादशाष्टमेशयोर्मध्ये यो बलवान् स महेश्वरग्रहः स्यात् ।

स्वस्य=आत्मकारकस्य, पाताभ्यां = राहुकेतुभ्यां, योगे सति, वा = अथवा, योगे = कारकाष्टमस्थाने, तयोः=राहुकेत्वोः, योगे सति, ततः = ताभ्यां द्वादशाष्टमेशयोर्यो बली स महेश्वरः स्यात् ॥ ४६-४८ ॥

भाषा—आत्मकारक से अष्टम स्थान का स्वामी महेश्वर ग्रह कहलाता है।

अगर आत्मकारक अपने उच्च में या स्वगृह में हो तो आत्मकारक से द्वादशेश और अष्टमेश इन दोनों जो बली हो वही महेश्वर ग्रह होता है।

अगर राहु या केतु से आत्मकारक युत हो या आत्मकारक से अष्टम भवन में राहु या केतु हो तो उन से अष्टमेश और द्वादशेश इन दोनों में जो बली हो वही महेश्वर ग्रह होता है ॥ ४६-४८ ॥

अथ ब्रह्मग्रहमाह—

प्रभुभाववैरीशप्राणी पितृलाभप्राप्यनुचरो विषमस्थो ब्रह्मा ॥४९॥

वि०—प्रभुभावेति । प्रभुभाववैरीशप्राणी=षष्ठाष्टमद्वादशेशानां मध्ये यो बली स, पितृलाभप्राप्यनुचरः=पितृलाभयोः लग्नसप्तमयोर्मध्ये यः प्राणी बली तत्स्यानुचरः पृष्ठगः, विषमस्थः=विषमराशिगतश्चेत् तदा स, ब्रह्मा=ब्रह्मग्रहो भवति । सप्तमभावभोग्यांशतो लग्नभुक्तांशं यावल्लग्नस्य पृष्ठं, लग्नभोग्यांशात् सप्तमभुक्तांशं यावत् सप्तमभावस्य पृष्ठम् ॥ ४९ ॥

भाषा—लग्न और सप्तम इन दोनों में जो बली हो उस से षष्ठेश, अष्टमेश और द्वादशेश इन तीनों में जो बली हो वह लग्न और सप्तम में जो बली हो उस के पृष्ठ राशि में स्थित होकर विषम राशि में हो तो वह ब्रह्मग्रह कहलाता है।

सप्तम भाव के भोग्यांश से लग्न के भुक्तांश पर्यन्त लग्न के पृष्ठ और लग्न के भोग्यांश से सप्तम के भुक्तांश पर्यन्त सप्तम भाव के पृष्ठ समझना चाहिए ॥ ४९ ॥

अत्र विशेषमाह—

**ब्रह्माणि शनौ पातयोर्वा ततः ॥५०॥ बहूनां योगे स्वजातीयः ॥५१॥ राहुयोगे विपरीतम् ॥ ५२ ॥ ब्रह्मा स्वभावेशो भावस्थः ॥ ५३ ॥ विवादे बली ॥ ५४ ॥**

वि०—ब्रह्माणीति । शनौ=शनैश्चरे, ब्रह्मणि=ब्रह्मत्वं प्राप्ते, वा, पातयोः=राहुकेत्वोर्ब्रह्मत्वं प्राप्तयोः, ततः = षष्ठः ( षष्ठाधीश इत्यर्थः ), ब्रह्मा भवति ।

बहूनां=एकाधिकानां ग्रहाणां ब्रह्मयोगे प्राप्ते सति, स्वजातीयः=अंशाधिको ब्रह्मा भवति ।

राहुयोगे, विपरीतं=विलोमं ( अल्पांश एवेत्यर्थः ), ब्रह्मा भवति ।

स्वभावेशः=य आत्मकारकादष्टमेशः तथा भावस्थः=अष्टमस्थश्च यः सोऽपि ब्रह्मा भवति ।

विवादे=अत्रापि ब्रह्मत्वप्राप्तरूपविवादे, बली=तयोर्मध्ये यो बली स ब्रह्मा भवति ॥

भाषा—शनि, राहु या केतु ब्रह्मत्व प्राप्त हो तो उस से षष्ठेश ब्रह्मा होता है ।

यदि एक से अधिक ग्रह में ब्रह्मत्व प्राप्त हो तो उन में अधिक अंश वाला ग्रह ब्रह्मा होता है ।

राहु के योग होने पर विपरीत ब्रह्म ग्रह होता है, अर्थात् सब से अल्प अंश वाला ग्रह ब्रह्मा होता है ।

एवं आत्मकारक से अष्टमेश और अष्टम स्थान में स्थित ग्रह भी ब्रह्मा होता है । यहां पर विवाद हो तो सब से बली ग्रह ब्रह्मा होता है ॥ ५०–५४ ॥

ब्रह्ममहेश्वरग्रहयोरायुर्ज्ञानमाह—

**ब्रह्मणो यावन्महेश्वरर्क्षदशान्तमायुः ॥ ५५ ॥**

**तत्रापि महेश्वरभावेशत्रिकोणाद्दे ॥ ५६ ॥**

वि०—ब्रह्मण इति । ब्रह्मणः=ब्रह्मग्रहात्, महेश्वरर्क्षदशान्तं=महेश्वरग्रहाश्रितराशिस्थिरदशान्तं यावत्, आयुः=आयुर्दायः स्यात् ।

तत्रापि=महेश्वरग्रहाश्रितराशिस्थिरदशायामपि, महेश्वरभावेशत्रिकोणाद्दे=महेश्वराद्यो भावेशोऽष्टमेशः तस्य त्रिकोणाद्दे त्रिकोणराशिदशायां निधनं स्यात् ॥

भाषा—ब्रह्म ग्रह से महेश्वरग्रहाश्रित राशि की स्थिर दशा पर्य्यन्त आयु होती है । उस में भी महेश्वर ग्रह से जो अष्टमेश उस से त्रिकोण राशि की दशा में निधन होता है ॥ ५५–५६ ॥

अथ मारकग्रहनिधनयोगावाह—

स्वकर्मचित्तरिपुरोगनाथप्राणी मारकः ॥५७॥ चित्तनाथः प्रायेण ॥ ५८॥ तद्ग्रहदशायां निधनम् ॥५९॥ तत्रापि कालाद्रिपुरोगचित्तनाथापहारे ॥६०॥

वि०—स्वकर्मेति । स्वकर्मचित्तरिपुरोगनाथप्राणी=स्वात् आत्मकारकात् कारकाल्लग्नाद्वा कर्मचित्तरिपुरोगनाथानां तृतीयषष्ठद्वादशाष्टमेशानां मध्ये यः प्राणी बली स मारकः स्यात् ।

चित्तनाथः=उक्तमारकग्रहेषु षष्ठेशः, प्रायेण=बाहुल्येन मारकः स्यात् ।

तद्ग्रहदशायां=तेषां मारकग्रहाणां ग्रहदशायां राशिदशायां निधनं भवति ।

तत्रापि=मारकग्रहराशिदशायामपि, कालात्=सप्तमात् लग्नात्कारकाद्वे स्थितैः, रिपुरोगचित्तनाथापहारे=रिपुरोगचित्तनाथानां षष्ठाष्टमद्वादशेशानां अपहारे अन्तर्दशायां निधनं स्यात् ॥ ५७-६० ॥

भाषा—आत्मकारक या लग्न से तृतीयेश, षष्ठेश, अष्टमेश और द्वादशेश, इन चारों में जो बली हो वह मारक होता है ।

मारक ग्रह जिस राशि में बैठा हो उस राशि की दशा में मरण होता है । उस में भी लग्न या कारक से जो सप्तम हो उस से षष्ठेश, अष्टमेश और द्वादशेश की अन्तर्दशा में मरण होता है ॥ ५७-६० ॥

अथ मन्थान्तरे मारकस्थानमाह—

अष्टमे मारकस्थानमष्टमादष्टमं च यत् । तयोरपि व्ययस्थानं मारकस्थानमुच्यते ॥

तत्राप्याद्यव्ययस्थानाद्द्वितीयं बलवत्तरम् ।

भाषा—जन्म लग्न से अष्टम स्थान और अष्टम स्थान से अष्टम स्थान ( जन्म लग्न से तृतीय स्थान ) इन दोनों से व्यय स्थान अर्थात् सप्तम और द्वितीय स्थान मारक स्थान कहलाते हैं ।

अथ मारकेश विचारमाह—

अल्पमध्यमपूर्णायु प्रमाणमिह योगजम् । विज्ञाय प्रथमं पुंसां ततो मारकचिन्तनम् ॥
महामारकसंज्ञौ तौ शनिकेतू इति स्मृतौ । आद्याद्वितीयकामेशौ मारकावष्टमेश्वरः ॥
षष्ठपे पापभूयिष्ठे षष्ठेशो मुख्यमारकः ।

भाषा—प्रथम अल्प, मध्य और पूर्ण आयुर्योगों का ज्ञान कर मारकेश का विचार करना चाहिए । शनैश्चर और केतु महा मारक संज्ञक हैं । सप्तमेश, द्वितीयेश और अष्टमेश मारकेश होते हैं । अगर षष्ठ स्थान में बहुत पापग्रह हों तो षष्ठेश मुख्य मारक होता है ।

अथ मरणसमयज्ञानमाह—

मारकेशदशाकाले मारकस्थस्य च पापिनः। पापे पापयुजां पाके सम्भवे निधनं नृणाम्॥
असम्भवं व्ययाधीशदशायां मरणं दिशेत्। तदभावेऽष्टमेशस्य दशायां निधनं पुनः॥
मन्दश्चेत्पापसंयुक्तो मारकग्रहयोगतः। तिरस्कृत्य ग्रहान्सर्वान्निहन्ता पापकृच्छनिः॥

भाषा—मारकेश ग्रह की दशा में और मारक स्थान में स्थित पाप ग्रह की अन्तर्दशा में अथवा पाप ग्रह की दशा और पाप ग्रह की अन्तर्दशा में आयु का अन्तिम समय हो तो मनुष्य की मृत्यु होती है। उस के असम्भव हो तो व्ययेश की दशा में उस के असम्भव हो तो अष्टमेश की दशा में मरण होता है। यदि शनैश्चर पापग्रहों से युत हो तो सब पूर्वोक्त मारक ग्रहों को हटा कर वह स्वयं मृत्यु कारक होता है॥

अथ ग्रन्थान्तरेऽल्पायुरादियोगमाह—

अल्पायुर्दिननाथस्य शत्रुर्लग्नाधिपो यदि। समत्वे मध्यमायुः स्यान्मित्रे दीर्घायुरादिशेत्॥
बलहीने विलग्नेशे जीवे केन्द्रत्रिकोणगे। षष्ठाष्टमव्यये पापे मध्यमायुरुदाहृतम्॥
शुभे केन्द्रत्रिकोणस्थे शनौ बलसमन्विते। षष्ठे वाप्यष्टमे पापे मध्यमायुरुदाहृतम्॥
लग्ने त्रिकोणे केन्द्रे वा मध्यमायुश्च मिश्रिते।

भाषा—यदि लग्नेश सूर्य का शत्रु हो तो अल्पायु, सम हो तो मध्यायु और मित्र हो तो दीर्घायु योग होता है।

लग्नेश निर्बल हो, बृहस्पति केन्द्र या त्रिकोण में हो, षष्ठ, अष्टम, द्वादश में पाप ग्रह हो तो मध्यायु योग होता है।

यदि केन्द्र या त्रिकोण में शुभ ग्रह हो शनि बल युत हो और पाप ग्रह षष्ठ, अष्टम में हो तो मध्यायु योग होता है।

अथवा केन्द्र या त्रिकोण में शुभ ग्रह हो शनि बली हो और लग्न, त्रिकोण, केन्द्र इन में ही पाप ग्रह हो तो मध्यायु योग होता है। उक्त योग मिश्रित होने पर भी मध्यायु योग कहना चाहिए।

अथ ग्रन्थान्तरे चायुर्योगमाह—

आयुः स्थानाधिपः पापैः सहैव यदि संस्थितः।
करोत्यल्पायुषं जातं लग्नेशोऽप्यत्र संस्थितः॥

एवं हि शनिना चिन्ता कार्या सर्वविचक्षणैः। कर्माधिपेन च तथा चिन्तनं कार्यमायुषः॥
षष्ठे व्ययेऽपि षष्ठेशो व्ययाधीशो रिपौ व्यये। लग्नेऽष्टमे स्थितोवापि दीर्घमायुः प्रयच्छति

भाषा—जहाँ कहीं पाप ग्रहों के साथ अष्टमेश स्थित हो और लग्नेश अष्टम स्थान

में बैठा हो तो अल्पायु योग होता है। इसी तरह शनि और कर्मेश के वश भी आयु का विचार करना चाहिए।

अगर लग्नेश षष्ठ या द्वादश स्थान में बैठा हो, व्ययेश षष्ठ द्वादश, लग्न या अष्टम स्थान में हो तो दीर्घायु योग होता है।

अन्यच्च—

स्वस्थो न स्वांशके नाधिमित्रांशे मित्रमन्दिरे। दीर्घायुषं करोत्येव लग्नेशोऽष्टमपः पुनः॥
लग्नाष्टमपकर्मेशमन्दाः केन्द्रत्रिकोणयोः। लाभे वा संस्थितास्तद्वद् दीशेयुर्दीर्घमायुषम्॥
रन्ध्रेशे नीचराशिस्थे रन्ध्रे पापग्रहैर्युते। लग्नेशो दुर्बलो यस्य अल्पायुर्भवति ध्रुवम्॥
रन्ध्रेशे पापसंयुक्ते रन्ध्रे पापग्रहैर्युते। व्यये क्रूरग्रहैर्युक्ते जातमात्रे मृतिं वदेत्।
केन्द्रत्रिकोणस्थाः पापाः षष्ठाष्टमे शुभा यदि॥
लग्नरन्ध्रेशनीचस्थे जातमात्रे मृतिं वदेत्। पञ्चमे पापसंयुक्ते रन्ध्रेशे पापसंयुते॥
रन्ध्रे पापग्रहैर्युक्ते अल्पायुष्यः प्रजायते।

भाषा—अगर लग्नेश या अष्टमेश स्वगृह में हो कर अपने नवांश में या अधिमित्र के नवांश में न बैठ कर मित्र के नवांश में बैठा हो तो दीर्घायु योग होता है।

अगर लग्नेश, अष्टमेश, कर्मेश और शनि केन्द्र, त्रिकोण या लाभ स्थान में स्थित हों तो दीर्घायु योग होता है।

अगर लग्नेश नीच स्थान में हो अष्टम स्थान पाप ग्रह से युक्त हो और लग्नेश दुर्बल हो तो अल्पायु योग होता है।

अगर अष्टमेश पाप ग्रह से युत हो अष्टम स्थान पाप ग्रह से युत हो और द्वादश में पाप ग्रह हो तो पैदा होते ही मृत्यु होती है।

अगर केन्द्र या त्रिकोण में पाप ग्रह, षष्ठ और अष्टम में शुभ ग्रह और लग्नेश तथा अष्टमेश नीच राशि में हो तो जातक पैदा होते ही मर जाता है।

यदि लग्न से पञ्चम स्थान, अष्टमेश और अष्टम स्थान पाप ग्रहों से युत हो तो अल्पायु योग होता है।

अथ ग्रन्थान्तरे मृत्युयोगावाह—

रन्ध्रेशे रिपुरन्ध्ररिःफगृहगे तत्पाकभुक्तौ मृतिं मन्दाक्रान्तगृहेशपाकसमये रन्ध्रेशभुक्तौ तथा।
पाके रन्ध्रगृहाभिधस्य तदनुक्रान्तस्य भुक्तौ तु वा
खेटानां बलदुर्बलेन सकलं संचिन्त्य यत्नाद्वदेत्॥

भाषा—यदि अष्टमेश षष्ठ, अष्टम, द्वादश इन तीनों स्थानों में से किसी एक स्थान में हो तो उस की दशा अन्तर्दशा के समय मृत्यु होती है।

अथवा शनैश्चर जिस स्थान में बैठा हो उस स्थान के स्वामी की दशा और अष्टमेश की अन्तर्दशा में मृत्यु होती है।

अथवा अष्टमेश की दशा और अष्टम स्थान में स्थित ग्रह की अन्तर्दशा दशा में मृत्यु होती है।

अगर अष्टम स्थान में दो तीन ग्रह हों तो उन में जो सब से निर्बल ग्रह हो उस की अन्तर्दशा में मृत्यु होती है।

अथ प्रकारान्तरेण मरणयोगमाह—

लग्नात्पञ्चमराशिपेन सहितो व्योमाटनानां दशा
संख्या भानुहृतावशेषगृहगे मृत्युं दिनेशे वदेत् ।
पुत्रेशो न वियच्चरेण सहितः स्वाब्देन सञ्चिन्तये-
ल्लग्नेशेन युताद्भमव्रविहृतं संक्रान्तिपूर्वं दिनम् ॥

भाषा—लग्न से पञ्चम राशि के स्वामी से युत ग्रहों की दशा संख्या में बारह से भाग देने से जो शेष बचे उस के समान संख्या वाली राशि में जब सूर्य आवे तब मृत्यु कहनी चाहिए।

यदि पञ्चमेश किसी अन्य ग्रह से युत न हो तो केवल उसी के दशा वर्ष से विचार करना चाहिए। लग्नेश से युत ग्रह के दशा वर्ष में तीस का भाग देने से जो शेष बचे संक्रान्ति दिन से उतने दिन पर मृत्यु होती है ॥ १६ ॥

अथ प्रकारान्तरेण मृत्युयोगमाह—

देहेशे च विनाशपे बलयुते केन्द्रत्रिकोणस्थिते
तद्युक्तग्रहपाकभुक्तिसमये रोगापवादः फलम् ।
रन्ध्रेशस्तनुपश्च खेचरयुतौ केन्द्रत्रिकोणस्थितौ
रन्ध्रस्थानगतस्य पाकसमये मृत्युं समेति ध्रुवम् ॥

भाषा—यदि लग्नेश और अष्टमेश बली हो कर केन्द्र या त्रिकोण में स्थित हों तो उस से युत ग्रह की दशा अन्तर्दशा में रोग का अपवाद होती है।

लग्नेश अष्टमेश दोनों किसी भी ग्रह से युत हो कर केन्द्र या त्रिकोण में स्थित हों तो अष्टम स्थान में स्थित ग्रह की दशा में निश्चय कर के मृत्यु होती है।

अथान्येऽपि मृत्युयोगाः—

लग्नेशे निधनारिरिष्फगृहगे राहौ स केतौ तु वा
होरारन्ध्रपसंयुतग्रहदशा जातस्य मृत्युप्रदा ।
तत्षेटान्वितराशिनायकदशा नाशप्रदा देहिनां
खेटानां प्रथमागतस्य फणिनः पाकापहारे क्रमात् ॥

भाषा—लग्नेश, अष्टमेश दोनों षष्ठ या द्वादश गृह में हो कर राहु या केतु के साथ हों तो लग्नेश या अष्टमेश से युत ग्रह की दशा में मृत्यु होती है।

अगर उन दोनों के साथ में कोई भी ग्रह न हो तो उस में युत राशि स्वामी की दशा में मरण होता है।

पूर्वोक्त ग्रहों की दशा में राहु की अन्तर्दशा आने पर मुख्य मारक लक्ष्य होता है।

अथ कष्टसुखमृत्युयोगमाह—

जातस्य जन्मसमये विबले विलग्ने लग्नेशरन्ध्रपतिपाकमतीव कष्टम् ।

पश्चादतीव सुखमेति विलग्ननाथे वीर्यान्विते निधनपस्य मृतिं दशायाम् ॥

भाषा—जातक के जन्म काल में लग्न बलहीन हो तो लग्नेश और अष्टमेश की दशा कष्ट देने वाली होती है।

और दशा के अन्त में विशेष सुख होता है। अगर लग्नेश बली हो तो अष्टमेश की दशा में मृत्यु होती है।

अथान्यदप्याह—

नाशे नाशपतौ तु तद्गतदशा भुक्तौ समेत्यामयं

लग्ने लग्नपतौ तु लग्नपदशा भुक्तौ शरीरार्तिमान् ।

पश्चादामयनाशनं तनुसुखं मोदश्च सञ्जायते रन्ध्रेशे बलसंयुते तनुपतेर्दाये मृतिर्देहिनाम् ॥

भाषा—अगर अष्टम स्थान के स्वामी अष्टम स्थान में बैठा हो तो उस की अन्तर्दशा में रोग होता है।

अगर लग्नेश लग्न में बैठा हो तो उस की अन्तर्दशा में पहले शरीर में कष्ट, पीछे रोग का नाश शरीर में सुख और अनेक तरह के हर्ष होते हैं। यदि अष्टमेश बली हो तो लग्नेश की दशा में मृत्यु होती है।

अथ पितृभ्यां समं मृत्युयोगमाह—

त्रिकोणे केन्द्रे वा यदि पितृतनुक्षेत्रपतयो दशाभुक्तौ तेषामनुमरणमाहुर्मुनिगणाः ।

कुभौमे मन्दार्के फणियुजि तु चेन्दौ निधनगे

त्वपस्मारस्तस्मान्मरणमथवेन्दौ कृशतनौ ॥

भाषा—नवमेश, लग्नेश और चतुर्थेश त्रिकोण या केन्द्र में हो तो उन की दशा, अन्तर्दशा में जातक के मरण के पश्चात् उस के माता, पिता का भी मरण होता है ऐसा मुनि लोगों का कथन है।

अगर मङ्गल या शनि या राहु के साथ हो कर चन्द्रमा निर्बल हो तो अपस्मार (मृगी) से मृत्यु होती है।

अन्यदप्याह—

नीचेदष्टमखेचरो यदि तनुस्थाने सचिन्त्यते-

न्मन्दे लग्नगतेऽथवाष्टमगते तत्पाकभुक्तौ मृतिः ।

रन्ध्रेशोदयनायकौ सखचरौ युक्तग्रहो दुर्बलो,
यस्तस्य द्युचरस्य पाकसमये भुक्तौ च मृत्युं वदेत् ॥

भाषा—यदि अष्टम स्थान में ग्रह न हो तो लग्न में जो ग्रह स्थित हो उसी के वश विचार करना चाहिए।

अगर शनि लग्न या अष्टम में हो तो उस की दशा, अन्तर्दशा में मरण होता है।

अष्टमेश और लग्नेश जिस ग्रह से युत हो यदि वह ग्रह निर्बल हो तो उसी के दशा, अन्तर्दशा में मृत्यु होती है।

नाशस्थे तनुपेऽथवा निधनपे पापेन युक्तेक्षिते
मूढेऽस्तगतेऽथवा रिपुगृहे जातो गतायुर्भवेत्।
दीर्घायुर्निजतुङ्गगे शुभयुते केन्द्रत्रिकोणेऽथवा
रन्ध्रे रन्ध्रपतौ चिरायुरुदयं याते विलग्नाधिपे ॥

भाषा—लग्नेश अष्टम में अथवा पाप ग्रहों से युत अष्टमेश अस्त हो या शत्रु गृह में हो तो जातक आयु रहित होता है।

यदि शुभग्रहों से युत अष्टमेश अपने उच्च में स्थित हो कर केन्द्र या त्रिकोण में हो तो दीर्घायु योग होता है।

अथवा अष्टमेश अष्टम में और लग्नेश लग्न में हो तो भी चिरायु होता है।

अथ पुनरल्पायुश्चिरायुर्योगावाह—

रन्ध्राधिपे पापगृहोपयाते दुःस्थानगे पापयुतेऽल्पमायुः।
शुभान्विते शोभनराशियुक्ते शुभेक्षिते रन्ध्रगते चिरायुः ॥

भाषा—अष्टमेश पापगृह में, दुःस्थान ( ६, ८, १२ ) में स्थित होकर पाप ग्रह से युत हो तो अल्पायु होता है।

यदि शुभ ग्रह शुभ राशि में हो, अष्टम में स्थित हो कर शुभग्रह से दृष्ट हो तो चिरायु होता है।

अथ पुनरल्पायुर्दीर्घायादियोगानाह—

अल्पायुर्व्ययगेऽथवा रिपुगते पापान्विते रन्ध्रपे
लग्नेशेन युते नु तत्र विबले जातोऽल्पजीवी नरः।
स्वस्थे रन्ध्रपतौ चिरायुरुदयच्छिद्राधिपौ षष्ठगौ-
रिःफस्थौ यदि वा यमेति मनुजो जातश्चिरायुर्बलम् ॥
व्याप्तोदयरन्ध्रराशिपतयः केन्द्रत्रिकोणायगाः।
दीर्घायुर्विबलाः समानुतनया यथाल्पमायुर्वदेत् ॥

भाषा—अष्टमेश पापग्रह से युत हो कर द्वादश या षष्ठ में स्थित हो तो जातक अल्पायु होता है।

अगर अष्टमेश-लग्नेश के साथ हो कर द्वादश या षष्ठ स्थान में हो और निर्बल हो तो जातक अल्पायु होता है।

अगर अष्टमेश अपने गृह में हो तो दीर्घायु होता है।

यदि या लग्नेश और अष्टमेश षष्ठ या द्वादश में हो और शुभग्रह से युत हो तो दीर्घायु होता है।

दशमेश, लग्नेश और अष्टमेश केन्द्र, त्रिकोण या एकादश में स्थित हों तो दीर्घायु होता है। यदि उक्त ग्रह शनि के साथ हों तो अल्पायु होता है।

अथ मरणस्थानमुक्तं सर्वार्थचिन्तामणौ—

शनौ वा चरराशिस्थे चरांशस्थेऽथवा भवेत्। स्थिरे रन्ध्रे तदीशोऽपि स्थिरराशौ तदंशके॥
शनौ वा स्थिरराश्यंशे स्वगृहे मरणं भवेत्। रन्ध्रे द्विदेहराश्याद्यो मार्गे मरणमादिशेत्॥

भाषा—यदि शनैश्चर चर राशि या चर राशि के नवांश में हो तो दूर देश में मरण होता है।

एवं अष्टम स्थान स्थिर राशि में हो और उस राशि का स्वामी भी स्थिर राशि में हो तो अपने घर में मरण होता है।

तथा अष्टम स्थान में द्विस्वभाव राशि [redacted] और उस का स्वामी भी द्विस्वभाव में हो तो रास्ते में मरण होता है।

अथ परिभवादियोगमाह—

रन्ध्रेशे पापसंयुक्ते पापर्क्षे तदन्तरे। पापक्षेत्रेऽथवा रन्ध्रे जातः परिभवान्वितः॥
शुभग्रहाणां सम्बन्धे रन्ध्रे परिभवो नहि। चरे रन्ध्रे मृतिर्दूरे तदीशे चरराशिगे॥

भाषा—अगर अष्टमेश पाप ग्रह से युत हए हो, पापग्रहों के मध्य में हो, पाप ग्रहों के राशि में हो अथवा अष्टम स्थान में हो तो वह मनुष्य तिरस्कृत होता है।

यदि अष्टम स्थान में शुभ ग्रहों का सम्बन्ध हो तो तिरस्कृत नहीं होता है।

यदि अष्टम स्थान चर राशि के और अष्टमेश भी उसी में ( चर राशि में ) हो तो दूर देश में मृत्यु होती है।

अथ पुत्रादिमरणयोगमाह—

लग्नेऽर्कचन्द्रौ व्ययगास्तु पापाः पितोर्मृतिं शोभनदृष्ट्यभावे।
अस्ते रवौ चन्द्रयुते त्रिलग्ने पापान्विते तत्सुतमृत्युमाहुः॥
दिनेशचन्द्रौ व्ययगौ तदानीमन्धो भवेत्सौम्यदृशा विहीनौ।
युक्ते तयोरन्यतरेण रिष्फे काणो भवेत्सौम्यदृशा विहीने॥

दिनेशचन्द्रौ व्ययगौ तदीशौ लग्नस्थिते देहविनाशमाहुः ।
सुरेश्वरे रन्ध्रगते व्यये वा पापान्विते पापदृशा समेते ॥
लग्नाधिपे पूर्णबले सुखेशभाग्येश्वरौ नाशगतौ विहीनौ ।
जातस्य जन्मावसरे तदानीं पितुश्च मातुर्निधनं वदन्ति ॥

भाषा—सूर्य और चन्द्रमा लग्न में पाप ग्रह द्वादश में हो तथा इन पर किसी शुभ ग्रह की दृष्टि न हो तो बालक की मृत्यु होती है ।

सूर्य सप्तम में चन्द्रमा लग्न में पाप ग्रह से युत हो तो बालक की मृत्यु होती है।

सूर्य तीसरे में चन्द्रमा द्वादश में किसी भी शुभ ग्रह की दृष्टि से रहित हो तो वह जातक अन्धा होता है ।

अगर सूर्य, चन्द्र इन दोनों में से कोई एक ग्रह और दूसरा व्यय स्थान में हो और इन पर किसी भी शुभग्रह की दृष्टि न हो तो एक आंख से काना होता है ।

यदि सूर्य और चन्द्रमा व्यय स्थान में व्ययेश लग्न में हो तो शरीर नाश होता है।

यदि बृहस्पति अष्टम या द्वादश में हो और पापग्रह से दृष्ट युत हो तो जन्म समय में ही माता, पिता दोनों की मृत्यु होती है ।

अथवा लग्नेश पूर्ण बली, चतुर्थेश और नवमेश अष्टम स्थान में बल हीन हो तो भी जन्म समय में ही माता, पिता दोनों की मृत्यु होती है ।

अथ पुनर्मातापित्रोर्मरणयोगमाह—

अस्ते शशाङ्के यदि मातृमृत्युं पापान्विते पापदृशा समेते ।
भानौ पितुर्मृत्युमुदाहरन्ति मन्दारशुक्रैः सहिते सुतस्य ॥
तृतीयषष्ठस्थितखेचरेन्द्रैः पापग्रहैरन्त्यगतैश्च सौम्यैः ।
दिशोर्मृतिं वा कुमुदारबन्धौ चतुर्थरन्ध्रस्थितपापखेटैः ॥

भाषा—चन्द्रमा सप्तम स्थान में स्थित हो कर पापग्रहों से युत दृष्ट हो तो माता का मरण होता है ।

यदि सूर्य सप्तम में स्थित हो कर पापग्रहों से युत दृष्ट हो तो पिता का मरण होता है ।

यदि सप्तम में शनि, मङ्गल और शुक्र हो तो बालक का मरण होता है ।

यदि पाप ग्रह तृतीय, षष्ठ में स्थित हो शुभग्रह द्वादश में हो अथवा पापग्रहों से युत हो कर चन्द्रमा चतुर्थ या अष्टम स्थान में हो तो बालक की मृत्यु होती है ।

अथान्येऽप्यरिष्टयोगाः—

लग्नाद्शुभे कर्मणि भूमिपुत्रे पापेक्षिते मातुलमृत्युमाहुः ।
मन्देन युक्ते यदि पुत्रमृत्युं चन्द्रे हि तन्मातृमृतिं सपापे ॥

पितुर्मृतिर्वासरनायकेऽत्र न संशयः पापदृशा समेते ।
पापद्वयेनापि युतौ विलग्ननिशाकरौ मृत्युमुपैति बालः ॥
ग्रस्ते शशाङ्के परिवेषयुक्ते पापेक्षिते वा मरणं च सद्यः ।
लाभे शुभे वा यदि मन्दभौमौ फणीन्द्रयुक्तौ पितुरस्त्यपायः ॥
पापेक्षिते भूमिसुते कलत्रे जातः स मृत्युं समुपैति रन्ध्रे ।
सोऽत्थे धरासूनुयुते सपापे पापेक्षिते सोदरनाशमाहुः ॥

भाषा—जन्म लग्न से नवम या दशम स्थान में स्थित हो कर मङ्गल यदि पाप-ग्रह से दृष्ट हो तो जातक के आमा की मृत्यु होती है।

यदि शनैश्चर से युक्त हो तो उस के पुत्र की मृत्यु होती है।

चन्द्रमा से युत हो तो उस के माता की मृत्यु होती है।

अगर उक्त स्थानों में स्थित हो कर सूर्य-पापग्रह से देखा जाता हो तो निश्चय कर के उस के पिता की मृत्यु होती है।

अगर लग्नेश, चन्द्रमा दो पापग्रहों से युत हो तो बाल्य काल में ही वह मृत्यु को पाता है।

यदि जन्म काल में चन्द्रमा ग्रहण काल का अथवा परिवेष युक्त हो कर पाप दृष्ट हो तो माता शीघ्र मर जाती है।

यदि एकादश या नवम स्थान में शनैश्चर, मङ्गल और राहु युत हो तो उस के पिता का नाश होता है।

यदि मङ्गल सप्तम या अष्टम स्थान में स्थित हो कर पाप दृष्ट हो तो उस जातक की मृत्यु होती है।

यदि मङ्गल तृतीय भाव में स्थित हो कर पापग्रह से युत दृष्ट हो तो उस का भाई का नाश होता है।

इति महर्षिजैमिनिप्रणीतजैमिनिसूत्रटीकायां
द्वितीयाध्याये प्रथमः पादः ।

---

## अथ द्वितीयाध्याये द्वितीयपादः ।

तत्र पितृकारकग्रहमाह—

रविशुक्रयोः प्राणी जनकः ॥ १ ॥

वि०—रविशुक्रयोरिति । रविशुक्रयोः=सूर्यभार्गवयोः मध्ये यः प्राणी बलवान्, जनकः=पितृकारकः स्यात्, (तातस्तु जनकः पितेत्यमरः) ॥ १ ॥

भाषा—रवि और शुक्र इन दोनों में जो बलवान् हो वह पितृकारक होता है ॥१॥

अथ मातृकारकग्रहमाह—

चन्द्रारयोर्जननी ॥ २ ॥

वि०—चन्द्रारयोरिति । चन्द्रारयोः=चन्द्रमङ्गलयोर्मध्ये यो बलवानसौ, जननी = मातृकारकः स्यात् ॥ २ ॥

भाषा—चन्द्र और मङ्गल इन दोनों में जो बलवान् हो वह मातृ कारक होता है॥२॥

अथ तत्र विशेषमाह—

अप्राण्यपि पापदृष्टः ॥ ३ ॥

वि०—अप्राण्यपीति । अप्राण्यपि=निर्बलोऽपि ( रविशुक्रयोश्चन्द्रारयोश्च मध्ये यो निर्बलः सोऽपि ) पापदृष्टः = पापग्रहदृष्टश्चेत्तदा यथासंख्यं पितृमातृकत्वमवाप्नोति ॥ ३ ॥

भाषा—रवि, शुक्र और चन्द्र, मङ्गल इन दोनों युगल में निर्बल भी ग्रह अगर पाप ग्रह से देखा जाता हो तो वह क्रम से पितृकारक और मातृकारक होता है। जैसे सूर्य और शुक्र इन दोनों में जो ग्रह निर्बल हो वह भी अगर पाप ग्रह से देखा जाता हो तो वह पितृकारक होता है। तथा चन्द्र और मङ्गल इन दोनों में जो ग्रह निर्बल हो वह भी अगर पाप ग्रह से देखा जाता हो तो मातृकारक होता है ॥ ३ ॥

अथ मातापित्रोर्निधनसमयमाह—

प्राणिनि शुभदृष्टे तच्छूले निधनं मातापित्रोः ॥ ४ ॥

वि०—प्राणिनीति । प्राणिनि=बलवति (मातृकारके पितृकारके च), शुभदृष्टे= शुभग्रहावलोकिते सति, तच्छूले कारकग्रहशूलदशायां क्रमेण, मातापित्रोः=जननी-जनकयोः, निधनं = मरणं भवति, अर्थात् मातृकारकग्रहशूलदशायां मातुर्मरणं, पितृकारकग्रहशूलदशायां पितुर्मरणं भवति ॥ ४ ॥

भाषा—मातृकारक ग्रह तथा पितृकारक ग्रह बली और शुभ ग्रह से देखा जाता हो तो क्रम से कारक ग्रह की शूल दशा में माता पिता का मरण होता है। अर्थात् मातृकारक ग्रह की शूलदशा में माता का और पितृकारक ग्रह की शूलदशा में पिता का मरण होता है ॥ ४ ॥

अथात्र मतान्तरमाह—

तद्भावेशे स्पष्टयले ॥ ५ ॥ तच्छूल इत्यन्ये ॥ ६ ॥

वि०—तद्भावेश इति । ताभ्यांप्राण्यप्राणिपितृमातृकारकग्रहाभ्यां, भावेशे=

अष्टमेशे, स्वबले=अधिकबले सति, तच्छूले=अष्टमेशाश्रितशूलदशायां, मातापित्रोर्निधनमित्यन्ये-आचार्याः प्राहुः ॥ ५-६ ॥

भाषा—बलवान् या निर्बल मातृकारक और पितृकारक ग्रह से अष्टम स्थान का स्वामी अगर अधिक बलवान् हो तो उस अष्टमेश की शूलदशा में माता, पिता का मरण होता है यह भी किसी का मत है ॥ ५-६ ॥

अथ मातापित्रोरायुर्विचारे विशेषमाह—

आयुषि चान्यत् ॥ ७ ॥

वि०—आयुषीति । आयुषि=आयुर्दाये ( पित्रादीनामायुषि विचारणे ), अन्यत् प्रकारान्तरं विचार्यम् ॥ ७ ॥

भाषा—पिता और माता के आयुर्दाय विचार करने में और जो प्रकारान्तर कहे गये हैं, उस से भी विचार करना चाहिए ॥ ७ ॥

अथ पुनस्तयोर्निधनयोगमाह—

अर्कज्ञयोगे तदाश्रये क्रिये लग्नमेषदशायां पितुरित्येके ॥ ८ ॥

वि०—अर्कज्ञयोग इति । क्रिये द्वादशे (लग्नाद्द्वादशे), तदाश्रये=अर्कबुधाश्रये (सिंहमिथुनकन्यान्यतरराशिसत्त्वे), अर्कज्ञयोगे=सूर्यबुधयोर्योगे सति, लग्नमेषदशायां=लग्नात्तृतीयपञ्चमराशिदशायां, पितुः=तातस्य, निधनं स्यात् , इत्येके=केचिद्वदन्ति॥

भाषा—लग्न से बारहवें स्थान में सिंह या मिथुन या कन्या राशि पड़े उस में सूर्य और बुध का योग हो तो लग्न से तृतीय और पञ्चम राशि की दशा में पिता का निधन होता है । यह किसी का मत है ॥ ८ ॥

अथ बाल्यावस्थायां मातापित्रोर्निधनयोगमाह—

व्यर्कपापमात्रदृष्टयोः पित्रोः प्राग् द्वादशाब्दात् ॥ ९ ॥

वि०—व्यर्कपापेति । पित्रोः=मातृपितृकारकग्रहयोः, व्यर्कपापमात्रदृष्टयोः=सूर्यरहितपापमात्रदृष्टयोः, द्वादशाब्दात्=जातकस्य द्वादशवत्सरतुल्यावस्थातः, प्राक्=पूर्वमेव, पित्रोः=मातापित्रोर्निधनं स्यात् । अर्थान्मातृकारकग्रहे सूर्यरहितपापग्रहावलोकिते मातुर्मरणं, पितृकारकग्रहे सूर्यरहितपापग्रहावलोकिते पितुर्मरणं स्यात् । अत्र पित्रोरित्यस्य देहलीदीपन्यायेनान्वयो विधेयः ॥ ९ ॥

भाषा—मातृकारक और पितृ कारक ग्रह सूर्य रहित पाप ग्रह से देखा जाता हो तो बालक की बारह बरस की अवस्था से पहले ही क्रम से माता और पिता का मरण होता है ।

जैसे मातृकारक ग्रह सूर्य रहित पाप ग्रह से देखा जाता हो तो बालक की बारह बरस की अवस्था से पूर्व माता का मरण और पितृकारक ग्रह सूर्य रहित पाप ग्रह से देखा जाता हो तो बालक की बारह बरस की अवस्था से पूर्व पिता का मरण होता है। यहाँ पर "पित्रोः" इस शब्द को देहली दीपन्याय से अन्वय करना चाहिए।

अथ स्त्रीनिधनयोगमाह—

गुरुशूले कलत्रस्य ॥ १० ॥

वि०—गुरुशूल इति। गुरुशूले = गुर्वाश्रितराशित्रिकोणदशायां, कलत्रस्य = स्त्रियाः निधनं स्यात् ॥ १० ॥

भाषा—बृहस्पति की शूल दशा में स्त्री का निधन होता है ॥ १० ॥

अथान्येषां निधनयोगमाह—

तत्तच्छूले तेषाम् ॥११॥

वि०—तत्तच्छूल इति। तत्तच्छूले=तत्तत्कारकग्रहशूलदशायां, तेषां=तेषां तेषां निधनं स्यात्। भ्रातृपुत्रमातुलादिकारकग्रहशूलदशायां क्रमेण भ्रातृपुत्रमातुलादीनां निधनं स्यादित्यर्थः ॥ ११ ॥

भाषा—भ्रातृकारक, पुत्रकारक, मातुलकारक आदि की शूल दशा में क्रम से भ्राता, पुत्र, मातुल आदि का मरण होता है ॥ ११ ॥

अथ मरणस्य शुभाशुभत्वज्ञानमाह—

कर्मणि पापयुतदृष्टे दुष्टं मरणम् ॥ १२ ॥ शुभं शुभदृष्टयुते ॥१३॥ मिश्रे मिश्रम् ॥ १४ ॥

वि०—कर्मणीति। कर्मणि=तत्तत्कारकग्रहाल्लग्नाद्वा तृतीयस्थाने, पापयुतदृष्टे अशुभग्रहयुतदृष्टे सति, दुष्टं=नानाविधक्लेशसमन्वितं, मरणं=निधनं स्यात्। शुभयुतदृष्टे=शुभग्रहयुतदृष्टे, शुभं=अल्पक्लेशसहितं मरणं स्यात्। मिश्रे=शुभपापयोर्द्वयोरपि योगे दृष्टौ वा, मिश्रं शुभाशुभात्मकं मरणं स्यात् ॥ १२-१४ ॥

भाषा—कारक ग्रह से या लग्न से तृतीय स्थान पाप ग्रह से युत दृष्ट हो तो बहुत कष्ट के साथ मरण होता है। अगर वह तृतीय स्थान शुभ ग्रह से युत दृष्ट हो तो अल्प कष्ट के साथ मरण होता है। अगर शुभग्रह और पापग्रह इन दोनों से युत दृष्ट हो तो मध्यमरूप के कष्ट के साथ मरण होता है ॥ १२-१४ ॥

अथ ग्रहयोगादत्र विशेषमाह—

आदित्येन राजमूलात् ॥ १५ ॥ चन्द्रेण यक्ष्मणः ॥ १६ ॥

कुजेन व्रणशस्त्राग्निदाहाद्यैः ॥ १७ ॥ शनिना वातरोगात् ॥ १८ ॥
मन्दमान्दिभ्यां विषसर्पजलोद्बन्धनादिभिः ॥ १९ ॥
केतुना विषूचीजलरोगाद्यैः ॥ २० ॥
चन्द्रमान्दिभ्यां पूगमदान्नकवलादिभिः क्षणिकम् ॥ २१ ॥
गुरुणा शोफारुचिवमनाद्यैः ॥ २२ ॥ शुक्रेण मेहात् ॥ २३ ॥
मिश्रे मिश्रम् ॥ २४ ॥ चन्द्रदृग्योगान्निश्चयेन ॥ २५ ॥

वि०—आदित्येनेति। आदित्येन=रविणा युते दृष्टे वा तृतीये, राजमूलात्=राजहेतोर्मरणं स्यात्। चन्द्रेण=विधुना युक्ते दृष्टे वा तृतीये, यक्ष्मणः=क्षयरोगान्मरणम्। कुजेन=मङ्गलेन युक्ते दृष्टे वा तृतीये, व्रणशस्त्राग्निदाहाद्यैः=व्रणरोगशस्त्रप्रहाराग्निदाहाद्यैः कारणैर्मरणम्। शनिना मन्देन युक्ते दृष्टे वा तृतीये, वातरोगात्=वातव्याधेर्मरणम्। मन्दमान्दिभ्यां=शनिगुलिकाभ्यां युक्ते दृष्टे वा तृतीये, विषसर्पजलोद्बन्धनादिभिः=विषो विषभक्षणं सर्पो भुजङ्गदंशनं जलं जलरोगः उद्बन्धनं राजदण्ड इत्यादिभिः कारणैर्मरणम्। केतुना=शिखिना (केतुः शिखीत्यमरः) युतदृष्टे, विषूचीजलरोगाद्यैः =विषूची विषूचिकारोगः जलरोगो जलोदर इत्यादिभिः कारणैर्मरणम्। चन्द्रमान्दिभ्यां=चन्द्रगुलिकाभ्यां युतदृष्टे, पूगमदान्नकवलादिभिः=पूगमदः पूगफलमदः अन्नकवलोऽन्नकवलनिरोध इत्यादिभिः कारणैः क्षणिकं शीघ्रमरणम्। गुरुणा=बृहस्पतिना युतदृष्टे तृतीये, शोफारुचिवमनाद्यैः=शोफरोगेण अरुचिरोगेण वमनाद्यैर्वा मरणम्। शुक्रेण=सितेन युतदृष्टे, मेहात्=प्रमेहरोगान्मरणम्। मिश्रे=ग्रहद्वययोगे विमिश्रिते (बहूनां खेटानां तृतीये योगे दर्शने वेत्यर्थः), मिश्रात्=तत्तद्ग्रहोक्तमिश्रनिमित्तात् (नानारोगादित्यर्थः), मरणम्।

चन्द्रदृग्योगात्=चन्द्रयुतदृष्टिसत्त्वात् (तृतीये तत्तद्ग्रहयोगदर्शनसत्त्वे तत्रैव चन्द्रदृष्टियोगसत्त्वेत्यर्थः), निश्चयेन=नियमेन, तत्तद्ग्रहोक्तमरणनिमित्तीभूतरोगान्मरणम्। एतेन चन्द्रदृग्योगाभावे तृतीयस्थाने तत्तद्ग्रहेण युतदृष्टेऽपि तत्तद्रोगान्मरणे सन्देह इति प्रकटीभवति ॥ १५–२५ ॥

भाषा—कारक ग्रह वा लग्न से तृतीय स्थान रवि से युत दृष्ट हो तो राजा के कारण मरण होता है। चन्द्रमा से युत दृष्ट हो तो क्षयरोग से, मङ्गल से युत दृष्ट हो तो व्रण शस्त्र, अग्निदाह आदि कारण से मरण होता है। शनैश्चर और गुलिक से युत दृष्ट हो तो सर्प, जलरोग, बन्धन आदि के कारण से मरण होता है। केतु से युत दृष्ट हो तो विषूचिकारोग, जलरोग आदि से मरण होता है। चन्द्रमा और

गुलिक से युत दृष्ट हो तो सुपारी के मद और अन्नग्रासादि से शीघ्र मरण होता है। बृहस्पति से युत दृष्ट हो तो शोफ ( सूजन ), अरुचिरोग, वमन इत्यादि से मरण होता है। शुक्र से युत दृष्ट हो तो प्रमेह,रोग से मृत्यु होती है।

अगर तृतीय स्थान में अनेक ग्रहों का योग वा दृष्टि हो तो अनेक रोगों से मरण होता है।

यदि लग्न वा कारक ग्रह से तृतीय स्थान में चन्द्रमा का योग वा दृष्टि हो तो निश्चय कर के उसी ग्रह के रोग से मरण होता है। इस से यह ध्वनित होता है कि तृतीय स्थान में चन्द्रमा का योग वा दृष्टि न हो तो जिस ग्रह से तृतीय स्थान युत दृष्ट है उस ग्रह के रोग से मरण में सन्देह रहता है ॥ १९-२१ ॥

अथ मरणदेशमाह—

शुभैः शुभदेशे ॥ २६ ॥ पापैः कीटके ॥ २७ ॥

वि०—शुभैरिति। शुभैः=शुभग्रहैर्योगे तृतीयस्थाने, शुभदेशे=पुण्यभूमौ ( वाराणस्यादितीर्थस्थान इत्यर्थः ), मरणं स्यात्। पापैः=पापग्रहैर्युतदृष्टे तृतीयस्थाने, कीटके=निन्दितदेशे (मगधादिगर्हितस्थान इत्यर्थः) मरणं स्यात् ॥२६-२७॥

भाषा—तृतीय स्थान शुभ ग्रह से युत दृष्ट हो तो शुभ देश ( काशी आदि तीर्थ स्थान ) में मरण होता है। अगर पाप ग्रह से युत दृष्ट हो तो कीटक ( मगध आदि निन्दित स्थान ) में मरण होता है। इस से यह भी सिद्ध होता है कि तृतीय स्थान शुभग्रह और पापग्रह इन दोनों से युत दृष्ट हो तो मध्यम स्थान ( न पुण्य स्थान और न अपुण्य स्थान ) में मृत्यु होती है ॥ २६-२७ ॥

अथ ज्ञानाज्ञानपूर्वकमरणयोगमाह—

गुरुशुक्राभ्यां ज्ञानपूर्वकम् ॥ २८ ॥ अन्यैरन्यथा ॥ २९ ॥

वि०—गुरुशुक्राभ्यामिति। लग्नकारकग्रहाद्वातृतीये, गुरुशुक्राभ्यां=बृहस्पतिभार्गवाभ्यां युतदृष्टे सति, ज्ञानपूर्वकं=ज्ञानपूर्वकमरणं स्यात्। अन्यैः-गुरुशुक्रातिरिक्तग्रहैर्युतदृष्टे, अन्यथा=ज्ञानपूर्वकं मरणम् ॥ २८-२९ ॥

भाषा—लग्न वा कारक ग्रह से तृतीय स्थान बृहस्पति, शुक्र इन दोनों से युत वा दृष्ट हो तो ज्ञान पूर्वक मरण होता है। अगर बृहस्पति और शुक्र को छोड़ कर अन्य किसी ग्रह से युत वा दृष्ट हो तो अज्ञान पूर्वक मरण होता है ॥ २८-२९ ॥

अथ पित्रोः संस्कर्त्र्याऽकर्तृत्वयोगमाह—

लेयजनकयोर्मध्ये शनिराहुकेतुभिः पित्रोर्न संस्कर्त्ता ॥ ३० ॥

वि०—लेयजनकयोरिति। लेयजनकयोः=लग्नद्वादशयोः, मध्ये = अन्तरे,

शनिराहुकेतुभिः=शनिराह्वोः शनिकेत्वोर्वा योगस्थितया, पित्रोः=मातापित्रोः, संस्कर्ता संस्कारकर्ता न स्यात् ॥ ३० ॥

भाषा—लग्न के या द्वादश स्थान के मध्य में शनैश्चर, राहु का, या शनि, केतु का योग पड़े तो माता, पिता का संस्कर्ता (दाहादिरूप संस्कार कर्ता) नहीं होता है ॥

अथात्रपित्रोर्विभागमाह—

लेयादिपूर्वार्धे ॥ ३१ ॥ जनकायपरार्धे ॥ ३२ ॥

सं० टी०—लेयादीति। लेयादिपूर्वार्धे=लग्नादिप्रथमषट्के लग्नात्षष्ठभावं यावदित्यर्थः लग्नस्य मध्यम्। जनकायपरार्धे=द्वादशादिव्युत्क्रमेणोत्तरषट्के सप्तमभावाद्द्वादशभावं यावदित्यर्थः, द्वादशस्य मध्यम् ॥ ३१-३२ ॥

भाषा—लग्न से लेकर छै राशि पर्य्यन्त लग्न का मध्य और द्वादश से लेकर व्युत्क्रम से छै राशि ( सप्तम से लेकर द्वादश ) पर्य्यन्त द्वादश का मध्य है।

इस से फलितार्थ यह निकला कि लग्न से षष्ठ भाव पर्य्यन्त किसी भी स्थान में शनैश्चर, राहु या शनैश्चर, केतु का योग हो तो माता का संस्कार करने वाला नहीं होता है। तथा सप्तम से लेकर द्वादश पर्य्यन्त किसी भी स्थान में शनैश्चर, राहु या शनैश्चर, केतु का योग हो तो पिता का संस्कार करने वाला नहीं होता है ॥

विशेष विचार—किसी का मत है कि लग्नादि क्रम से छै राशि पूर्वार्ध और द्वादशादि उत्क्रम से छ राशि उत्तरार्ध कल्पना करने से एक षट्क में राहु या केतु और दूसरे षट्क में शनि, राहु या शनि, केतु सब की कुण्डली में रहती है। अतः प्रत्येक कुण्डली में माता, पिता इन दोनों में किसी एक का असंस्कार कर्तृत्व योग प्राप्त हो जायगा। अतः ऐसा अर्थ करना सर्वथा असङ्गत है।

इस लिये उन्होंने दूसरी तरह से पूर्वार्ध और उत्तरार्ध कल्पना कर के अर्थ किया है। जैसे लेय ( लग्न ) और जनक ( मातृ कारक, पितृ कारक ) मान कर लग्न और कारक ग्रह के मध्य में शनि, राहु, केतु ये तीनों पड़े तो वह माता, पिता का संस्कार करने वाला नहीं होता है। अर्थात् लग्न से मातृ कारक ग्रह पर्य्यन्त पूर्वार्ध और पितृ कारक ग्रह से लग्न पर्य्यन्त उत्तरार्ध मान कर पूर्वार्ध में शनि, राहु, केतु ये तीनों ग्रह हों तो माता का संस्कार करने वाला नहीं होता है। और उत्तरार्ध में शनि, राहु, केतु ये तीनों पड़ें तो पिता का संस्कार करने वाला नहीं होता है। परन्तु इस तरह अर्थ करना बिलकुल असङ्गत है। क्योंकि इस तरह के अर्थ करने वालों ने मुनि के सूत्र का तथा दूसरे टीकाकारों का अर्थ बिलकुल नहीं समझा। क्योंकि इस तरह का अर्थ किसी ने नहीं लिखा है। सब का अभिप्राय यह नहीं है कि शनि, राहु, केतु अलग २ स्थान में रहें। किन्तु पूर्वार्ध ( लग्न से

षष्ठ राशि पर्य्यन्त ) में किसी भी स्थान में शनि, राहु या शनि, केतु का योग पड़े तो माता का संस्कार करने वाला नहीं होता है। और उत्तरार्ध ( सप्तम से लेकर द्वादश पर्य्यन्त ) में शनि, राहु या शनि, केतु का योग पड़े तो पिता का संस्कार करने वाला नहीं होता है, इस तरह का योग हजार में विरल कुण्डली में रहता है। न कि सब कुण्डली में।

अतः इस तरह का अर्थ करना सर्वथा सङ्गत है। दूसरी बात यह कि ( लेय= १३ हुआ, इस में बारह का भाग देने से शेष एक बचा अतः लेय से लग्न का ग्रहण करना उचित ही है। इसी तरह जनक=१०८ हुआ, इस में बारह का भाग देने से शेष शून्य अर्थात् बारह बचे। अतः जनक से द्वादश भाव का ग्रहण करना भी सर्वथा सङ्गत है।

इस के विरुद्ध अर्थ कर के शब्द को सुलाना ठीक नहीं है।

अथान्येऽपि योगा ग्रन्थान्तरादाकृष्यलिख्यन्ते—

अर्को राहुः कुजः सौरिर्लग्नात्तिष्ठति पञ्चमे। पितरं मातरं हन्ति भ्रातरं स्वमनुक्रमात्॥

भाषा—अगर लग्न से पञ्चम भाव में रवि, राहु, मङ्गल और शनैश्चर पड़े तो क्रम से पिता, माता, भ्राता और जातक को नाश करता है। अर्थात् जन्म लग्न से पञ्चम भाव में रवि पड़े तो पिता का, राहु पड़े तो माता का, मङ्गल पड़े तो भाई का और शनैश्चर पड़े तो जातक का विनाश होता है।

चन्द्रे बलिष्ठे यदि वा शुभो वा सौम्येक्षिते शोभनभागयुक्ते।

चतुष्टये मातृगृहाच्छुभाढ्ये मातुश्च दीर्घायुरुदाहरन्ति॥

भाषा—अगर चन्द्रमा बलवान् हो, या शुभ ग्रह से दृष्ट युत हो, और माता के स्थान से केन्द्र में शुभ ग्रह हों तो माता की आयु बढ़ती है॥

अन्यदप्याह—

यदा तुर्यभावे भवेत्पापखेटो बलेनाधिकश्चेत्तदा मातृनाशः।

तथा मन्दमाहेययोर्मध्यगश्चेद्भवेच्चन्द्रमाः सूर्ययुक्तेक्षितो वा॥

भाषा—अगर बलवान् पाप ग्रह चतुर्थ भाव में हो तो माता का नाश कहना चाहिए। अगर चन्द्रमा, शनि और मङ्गल के मध्य में गत हो या सूर्य से युत दृष्ट हो तो माता का नाश कहना चाहिए।

अन्यदप्याह—

रिपुस्थाने यदा पापा व्ययस्थाने च चन्द्रमाः। चतुर्थे मङ्गलो यस्य माता तस्य न जीवति॥

भाषा—जिस के छठे स्थान में पाप ग्रह हों, बारहवें स्थान में चन्द्रमा हो और चतुर्थ स्थान में मङ्गल हो उस की माता नहीं जीती है।

अन्यदप्याह—

अर्कात्तु तुर्यगे राहौ मन्दे वा भूमिनन्दने । गुरुशुक्रेक्षणमृते पितृहा जायते नरः ॥

भाषा—जिस के जन्म पत्री में रवि से चतुर्थ स्थान में राहु या शनि या मङ्गल पड़े, वह गुरु और शुक्र से युत दृष्ट न हो तो वह जातक पिता को नाश करने वाला होता है

अन्यदप्याह—

अष्टमस्थो यदा जीवः कर्मस्थाने महीसुतः । सिंहे सौरिर्भवेद्यस्य माता तस्य न जीवति

भाषा—जिस के जन्मपत्री में बृहस्पति अष्टम स्थान में हो, दशम स्थान में मङ्गल हो, शनैश्चर सिंह में हो तो उस को माता नहीं जीती है ।

अन्यदप्याह—

द्वादशे रिपुभावे वा यदा क्रूरो व्यवस्थितः । तदा मातुर्भयं विद्याच्चतुर्थे दशमे पितुः॥

भाषा—जिस के जन्मपत्री में बारहवें या छठे भाव में पापग्रह हों तो माता को अरिष्ट कहना चाहिए। अगर चतुर्थ और दशम भाव में पाप ग्रह हों तो पिता को अरिष्ट कहना चाहिए।

अथान्यदप्याह—

लग्नस्थितो यदा जीवो धने सौरिर्यदा भवेत् । सहजे च यदा राहुर्माता तस्य न जीवति

भाषा—जिस के जन्म पत्री में बृहस्पति लग्न में हो शनैश्चर धन भाव में हो, तृतीय भाव में राहु हो तो उस की माता नहीं जीती है ।

अन्यदप्याह—

लग्नाच्चन्द्राद्गुरुस्थाने याते सूर्यसुते यदि । पित्रोर्नाशस्तदाऽकाले वीक्षिते पापसंयुते ॥

भाषा—जिस के जन्म समय में लग्न वा चन्द्रमा से नवम स्थान में शनैश्चर बैठा हो पाप ग्रह से दृष्ट युत हो तो अकाल में माता और पिता का नाश कहना चाहिए।

अन्यदप्याह—

पापान्तरे पापयुते शशाङ्के पापेक्षिते मातृगृहे विनाशः ।
शुक्रात्तथैवं प्रवदन्ति सन्तस्तत्स्थानपाद्वा कथयन्ति शेषम् ॥
निशाकरात्पापयुते स्मरे वा भृगोस्तथैवं जननीविनाशम् ।
सुखे शनौ मातृविनाशमेति पापेक्षिते चेदचिरेण नाशः ॥

भाषा—चन्द्रमा दो पापों के मध्य में हो, पाप ग्रह से युत दृष्ट हो, चतुर्थ भाव में हों तो माता का विनाश होता है । शुक्र और चतुर्थ स्थान के पति से भी इसी तरह सज्जनों ने फल कहा है । अर्थात् शुक्र या चतुर्थेश दो पाप ग्रहों के मध्य में हो पाप ग्रह से युत दृष्ट हो चतुर्थ स्थान में हो तो माता का विनाश होता है । अगर शुक्र

चन्द्रमा से सप्तम स्थान में स्थित हो, पाप ग्रह से युत हो तो माता का विनाश होता है। अगर शनि सुख स्थान में हो तो माता का नाश करता है। अगर चतुर्थ स्थान स्थित शनि पाप ग्रह से देखा जाता हो तो बहुत जल्दी माता

अन्यदप्याह—

लग्ने चैकादशे सौरी रिपुस्थाने निशापतिः।भूमिपुत्रः सप्तमस्थो मातृपितृविनाशकः॥

भाषा—जिस के जन्म काल में लग्न या एकादश स्थान में शनैश्चर हो, छठे स्थान में चन्द्रमा हो, मङ्गल सप्तम स्थान में हो उस की माता और पिता का नाश होता है।

अथ सर्वार्थचिन्तामणौ—

चन्द्रे बलिष्ठे यदि वा भृगौ वा सौम्येक्षिते शोभनभागयुक्ते ।
चतुर्थये मातृगृहाच्छुभाख्ये मातुश्च दीर्घायुरुदाहरन्ति ॥
भावेशसंयुक्तनवांशनाथयुक्तांशपे केन्द्रयुते बलाढ्ये ।
शशिन्यच्छशाङ्काद्यदि केन्द्रयाते मातुश्च दीर्घायुरुदाहरन्ति ॥

भाषा—जिस के जन्म काल में चन्द्रमा या शुक्र बल युत हो, शुभ ग्रह से दृष्ट हो, शुभ ग्रह के अंश में हो तो चतुर्थ स्थान से केन्द्र में हो शुभ ग्रह से युत हो तो उस की माता को दीर्घायु कहना चाहिए। नवांश पति चतुर्थेश से युत नवांश पति से युत हो, केन्द्र में हो, बल युत हो या चन्द्रमा से केन्द्र स्थान में हो तो उस की माता को दीर्घायु कहना चाहिए।

तत्र मातृविनाशयोगमाह—

शुभेक्षितश्चेच्चिरकालमृत्युमुदाहरन्त्यत्र महानुभावाः ।
पापग्रहाणां भवने शनौ तु पापान्विते मातृविनाशमेति ॥

भाषा—पूर्वोक्त योग कारक ग्रह अगर शुभ ग्रह से दृष्ट हो तो अधिक काल के बाद मातृहा पितृहा योग प्राप्त होता है अगर शनि पापग्रहों के स्थान में हो पाप-ग्रह से युत हो तो शीघ्र मातृ विनाश होता है। ऐसा पण्डितों ने कहा है।

अथान्यदप्याह—

निशाकरात्पापयुते स्मरे वा भृगोस्तथैवं जननीविनाशः ।
सुखे शनौ मातृविनाशमेति पापेक्षिते चेदचिरेण नाशः ॥

भाषा—चन्द्रमा से या शुक्र से सप्तम स्थान पाप युत हो तो माता की मृत्यु होती है। तथा चतुर्थ स्थान में शनि हो तो विलम्ब से माता की मृत्यु होती है। अगर उस पर पाप ग्रह की दृष्टि हो तो शीघ्र माता की मृत्यु होती है।

अन्यदप्याह—

सप्तस्थाने यदा सौरिः शत्रुस्थाने च चन्द्रमाः। कुजश्च सप्तमस्थाने पितुस्तस्य न संशयः॥

भाषा—जिस के लग्न में शनि हो, शत्रु स्थान में चन्द्रमा हो और सप्तम स्थान में मङ्गल हो उस का पिता नहीं जीता है।

अन्यदप्याह—

उच्चस्थो वापि नीचस्थः सप्तमस्थो यदा रविः ।
तदा जातो निहन्त्याशु मातरं नात्र संशयः ॥

भाषा—अगर उच्च या नीच में रवि होकर लग्न से सप्तम में पड़े तो ऐसे योग में उत्पन्न लड़का बहुत जल्द माता का नाश करता है।

अन्यदप्याह—

इन्दुतो नवमे द्यूने नैधने पापखेचराः । अखिलाः पितरं हन्युर्बालं जातं समातृकम् ॥

भाषा—चन्द्रमा से नवम, सप्तम और अष्टम में सब पाप ग्रह हों तो वे सब पिता और माता के साथ बालक को नाश करते हैं।

अन्यदप्याह—

द्वादशाष्टमगे पापे लग्नेशे बलवर्जिते । जन्मकाले शिशुर्दुःखी स बालो मातृनाशकः ॥

भाषा—लग्नसे द्वादश या अष्टम में पापग्रह हो, लग्नेश बलहीन हो तो वह बालक जन्म समय में बहुत दुःखी होता है। और माता को नाश करने वाला होता है।

अथ मातृकष्टमाह ग्रन्थः—

चन्द्रमा यदि पापानां त्रितयेन प्रदृश्यते। मातृनाशो भवेत्तस्य शुभदृष्टे शुभं वदेत् ॥
-धने राहुर्बुधः शुक्रः सौरिः सूर्यो यदा स्थितः। तस्य मातुर्भवेन्मृत्युर्मृते पितरि जायते ॥
पापात्सप्तमरन्ध्रस्थे चन्द्रे पापसमन्विते। बलिभिः पापकैर्दृष्टे जातो भवति मातृहा ॥

उच्चस्थो वाऽथ नीचस्थः सप्तमस्थो यदा रविः ।
पानहीनो भवेद्बालः-अजाक्षीरेण जीवति ॥
चन्द्राच्चतुर्थगः पापो रिपुक्षेत्रे यदा भवेत् ।
तदा मातृवधं कुर्यात्केन्द्रे यदि शुभो न चेत् ॥

-लाभे क्रूरो व्यये क्रूरो धने सौम्यस्तथैव च । सप्तमे भवने क्रूरः परिवारक्षयं करः ॥

लग्नस्थे च गुरौ सौरौ धने राहौ तृतीयगे ।
इति चेज्जन्मकाले स्यान्माता तस्य न जीवति ॥
क्षीणचन्द्रात्त्रिकोणस्थैः पापैः सौम्यविवर्जितैः ।
माता परित्यजेद्बालं षण्मासाच्च न संशयः ॥

एकांशकस्थौ मन्दारौ यत्र कुत्र स्थितौ यदि ।
शशिकेन्द्रगतौ तौ वा द्विमातृभ्यां न जीवति ॥

भाषा—जिस के जन्म समय में तीन पाप ग्रहों से चन्द्रमा देखा जाता हो तो उस की माता की मृत्यु होती है। अगर चन्द्रमा शुभ ग्रह से देखा जाता हो तो शुभ कहना चाहिए, अर्थात् मातृनाश नहीं होता है।

जिस के जन्म समय में धन स्थान में राहु, बुध, शुक्र, शनैश्चर और रवि स्थित हो उसके पिता के मरण के बाद माता का मरण होता है।

जिस के जन्म समय में पाप सहित चन्द्रमा पाप ग्रह से सप्तम या अष्टम में स्थित हो और बली पाप ग्रहों से देखा जाता हो तो वह माता को नाश करने वाला होता है।

जिस के जन्म समय में उच्चस्थ या नीचस्थ रवि लग्न से सप्तम में स्थित हो तो माता के दूध नहीं पीकर अजा के क्षीर से जीता है।

जिस के जन्म समय में पाप ग्रह चन्द्रमा से चतुर्थ स्थान में होकर लग्न से छठे स्थान में पड़े अगर केन्द्र में शुभ ग्रह नहीं हो तो यह माता का नाश करता है। केन्द्र में शुभ ग्रह को होने पर मातृहा योग नहीं लगता।

जिस के जन्मकाल में लग्न और द्वादश में पाप ग्रह हो तथा धन स्थान में शुभ ग्रह हो और सप्तम स्थान में भी अगर पाप ग्रह हो तो यह जातक परिवार को नाश करने वाला होता है।

जिस के जन्म समय में, बृहस्पति लग्न में, शनि धन स्थान में और राहु तृतीय स्थान में हो तो उस की माता नहीं जीती है।

जिस के जन्म समय में क्षीण चन्द्र से शुभ ग्रह रहित हो पर पाप ग्रह त्रिकोण (९।५) में स्थित हो तो छै मास के भीतर माता बालक को कारण वश परित्याग करती है।

जिस के जन्म समय में एकांश में स्थित होकर शनि और मङ्गल कहीं भी स्थित हो तो यह लड़का दो माताओं से पालन किया जाता है। या ये दोनो चन्द्रमा से केन्द्र में स्थित हों तो दो माताओं से बालक जीता है।

अथ पितृकष्टमाह तत्रैव

लग्ने सौरिर्मदे भौमः षष्ठस्थाने च चन्द्रमाः ।
इति चेज्जन्मकाले स्यात् पिता तस्य न जीवति ॥

लग्ने जीवो धने मन्दरविभौमबुधास्तथा। विवाहसमये तस्य बालस्य म्रियते पिता ॥
सूर्यः पापेन संयुक्तः सूर्यो वा पापमध्यगः। सूर्यात्सप्तमगः पापस्तदा पितृवधो भवेत् ॥
सप्तमे भवने सूर्यः कर्मस्थो भूमिनन्दनः। राहुर्व्यये च यस्यैव पिता कष्टेन जीवति॥

दशमस्थो यदा भौम. शत्रुक्षेत्रसमाश्रितः। म्रियते तस्य जातस्य पिता शीघ्रं न संशयः॥
रिपुस्थाने यदा चन्द्रो लग्नस्थाने शनैश्चरः। कुजश्च सप्तमे स्थाने पिता तस्य न जीवति॥
पाताले चाम्बरे पापौ द्वादशे च यदा स्थितौ। पितरं मातरं हत्वा देशाद्देशान्तरं व्रजेत्॥
राहुजीवौ रिपुक्षेत्रे लग्ने वाथ चतुर्थके। त्रयोविंशतिमे वर्षे पुत्रस्तातं न पश्यति॥
भानुः पिता च जन्तूनां चन्द्रो माता तथैव च। पापदृष्टियुतो भानुः पापमध्यगतोऽपि वा॥

"पित्रारिष्टं विजानीयाच्छिशोर्जातस्य निश्चितम्।
भानोः षष्ठाष्टमर्क्षस्थैः पापैः सौम्यविवर्जितैः॥
चतुरस्रगतैर्वापि पित्रारिष्टं विनिर्दिशेत्।"

**भाषा**—जिस के जन्म काल में शनैश्चर लग्न में, मङ्गल सप्तम स्थान में, और षष्ठ स्थान में चन्द्रमा हो तो उस का पिता नहीं जीता है।

जिस के जन्म समय में लग्न में बृहस्पति, धन स्थान में, शनि, रवि, मङ्गल और बुध हो तो उस के विवाह काल में पिता की मृत्यु होती है।

जिस के जन्म काल में सूर्य पाप ग्रह से युत हो या सूर्य पापों के मध्य में हो और सूर्य से सप्तम में पाप ग्रह हो तो उस के पिता की मृत्यु होती है।

जिस के जन्म काल में सप्तम में सूर्य हो, मङ्गल दशम में हो और राहु व्यय स्थान में हो उस का पिता कष्ट से जीता है।

जिस के जन्म काल में लग्न से दशम में मङ्गल हो लेकिन् वह दशम स्थान मङ्गल के शत्रु का घर हो तो उस के पिता बहुत शीघ्र मरण को प्राप्त करता है।

जिस के जन्म समय में चन्द्रमा रिपुस्थान में हो लग्न में शनैश्चर हो मङ्गल सप्तम में हो तो उस का पिता नहीं जीता है।

जिस के जन्म काल में दो पाप ग्रह चतुर्थ, दशम या बारहवें में स्थित हो तो वह लड़का माता पिता को नाश करके देश २ घूमता है।

जिस के जन्म काल में राहु और बृहस्पति रिपुक्षेत्र में या लग्न में, या चतुर्थ में हो तो बालक २३ वर्ष में अपने पिता को नहीं देखता, अर्थात् उस के पिता मरण को प्राप्त करता है।

प्राणियों के पिता सूर्य और माता चन्द्रमा हैं। जिस के जन्मकाल में सूर्य पाप युत दृष्ट हो या पापों के मध्य में हो तो उस जातक के पिता को अरिष्ट कहना चाहिए। इस से सिद्ध होता है कि चन्द्रमा पाप युत दृष्ट या पाप मध्य में हो तो माता को अरिष्ट कहना चाहिए।

अगर सूर्य षष्ठ, अष्टम स्थान में स्थित हो, शुभ ग्रह से वर्जित पापग्रह चतुर्थ या अष्टम में स्थित हो तो पिता को अरिष्ट कहना चाहिए।

अथारिष्टभङ्गमाह—

एकोऽपि ज्ञार्यशुक्राणां लग्नात्केन्द्रगतो यदि। अरिष्टं निखिलं हन्ति तिमिरं भास्करो यथा॥
एक एव बली जीवो लग्नस्थोरिष्टसञ्चयम्। हन्ति पापक्षयं भक्त्या प्रणाम इव शूलिनः॥
एक एव विलग्नेशः केन्द्रसंस्थो बलान्वितः। अरिष्टं निखिलं हन्ति पिनाकी त्रिपुरं यथा॥
शुक्लपक्षे क्षपा जन्म लग्ने सौम्यनिरीक्षिते। विपरीतं कृष्णपक्षे तथारिष्टविनाशनम्॥
व्ययस्थाने यदा सूर्यस्तुलालग्ने तु जायते। जीवेत्स शतवर्षाणि दीर्घायुर्बालको भवेत्॥
गुरुभौमौ यदा युक्तौ गुरुदृष्टोऽथवा कुजः। हत्वारिष्टमशेषं च जनन्याः शुभकृद्भवेत्॥
चतुर्थदशमे पापः सौम्यमध्ये यदा भवेत्। पितुः सौख्यकरो योगः शुभैः केन्द्रत्रिकोणगैः॥

लग्नाच्चतुर्थे यदि पापखेटः केन्द्रत्रिकोणे सुरराजमन्त्री।
कुलद्वयानन्दकरः प्रसूतो दीर्घायुरारोग्यसमन्वितश्च॥

सौम्यान्तरगतैः पापैः शुभैः केन्द्रत्रिकोणगैः। सद्यो नाशयतेऽरिष्टं तद्भावोत्थफलं न सत्॥

भाषा—स्पष्टार्थ है।

अथ पूर्वोक्तयोगापवादमाह—

शुभदृग्योगाच्च ॥३३॥

वि०—शुभदृग्योगादिति। शुभदृग्योगात्=लग्नादिक्रमेण षड्राशिमध्ये द्वादशा-व्युत्क्रमेण षड्राशिमध्ये च शुभदृग्योगसत्त्वात्, न=पूर्वोक्तयोगो न स्यात्, माता-पित्रोः संस्कर्ता स्यादित्यर्थः॥ ३३॥

भाषा—लग्न से लेकर क्रमसे छ राशि पर्य्यन्त और द्वादश से लेकर उत्क्रम से छ राशि पर्य्यन्त ( ७-१२ ) स्थान शुभ ग्रह से युत या दृष्ट हो तो पूर्वोक्त योग नहीं होता है, किन्तु माता और पिता का संस्कार करने वाला होता है॥ ३३॥

इति महर्षिजैमिनिप्रणीतजैमिनिसूत्रटीकायां
द्वितीयाध्याये द्वितीयः पादः।

## अथ द्वितीयाध्याये तृतीयः पादः।

अथ दशाभेदबलभेदादीन् वक्ष्यति, तत्रादौ नवांशदशामाह—

विषमे तदादिर्नवांशः॥ १॥ अन्यथाऽऽदर्शादिः॥ २॥

वि०—विषम इति। विषमे=विषमराशौ जन्मलग्ने सति, तदादिः=लग्नादिः (लग्नादिक्रमेणेत्यर्थः), नवांशः=नवांशपाकः (नवांशदशेत्यर्थः), भवतीति शेषः।

अन्यथा=समराशौ जन्मलग्ने सति, आदर्शादि = सम्मुखराश्यादि ( सम्मुखराश्यादिव्युत्क्रमेणेत्यर्थः ), नवांशदशा भवति । अत्रायमाशय -विषमराशौ लग्ने लग्नादारभ्य प्रथमद्वितीयभावक्रमेण, समराशिलग्ने लग्नादारभ्य प्रथमद्वादशैकादशेति वैपरीत्यक्रमेण नवांशदशा भवति । समराशिलग्ने सप्तमादर्शभूतराशितस्तद्द्वादशस्थराशिरिति विशेषो विज्ञेयम् ।

लग्न युग्म यदा तर्हि सम्मुख तस्य चादिमम् ।

अस्यां दशायां प्रत्येकस्मिन् राशौ नव नव समा दशाब्दा भवन्त्यतोऽस्या नवांशदशेति नाम जातम् ।

अत्र नीलकण्ठेन—

"विषमे लग्ने सति तदादिर्लग्नादिर्नवांशदशा स्यात् । अन्यथा समराशौ लग्ने सत्यादर्शादि सप्तमराश्यादिर्नवांशदशा स्यात् । आदर्शः सम्मुखो भवति । सम्मुखराशि सप्तम एव भवति । एतद्दशायां प्रतिराशिनववर्षाब्दा भवन्तीति नवांशदशेति नामधेयज्ञेयम् । यत्तु

"स्थिरराशे षष्ठ राशिश्चरस्याष्टम एव सः ।

द्विस्वभावस्य राशिस्तु सप्तम सम्मुखो मत "

इति श्लोके कृत्वा सम्मुखत्व पश्चैतत्र तन्न वर्षदृष्टिपरमेव न त्वन्यपरमिति" व्याख्यातम् ।

इति नीलकण्ठव्याख्यानेऽन्यत्रापि बहुत्र पुस्तके "आदर्श" इति पदेन सप्तमराशिं गृहीत्वा व्याख्यातमस्ति । परञ्च तदसमीचीनमिव प्रतिभातीऽयत्र विबुधै निपुणं विचारणीयम् ॥ १-२ ॥

भाषा—इस पाद में दशा भेद चक्र भेद को कहते हैं । उन में प्रथम नवांश दशा में गणना क्रम बतलाते हैं।

जैसे—अगर जन्म लग्न विषम राशि में पड़े तो लग्नादि क्रम गणना से बारह राशियों की नवांश दशा होती है । अगर जन्म लग्न सम राशि में पड़े तो लग्न द्वादश आदि वैपरीत्य क्रमसे बारह राशियों की नवांश दशा होती है । इस दशा में प्रत्येक राशि के दशा मान नव नव वर्ष होते हैं । अतः इस का नवांश दशा नाम है ।

यहाँ पर नीलकण्ठ ने 'जन्मलग्न विषमराशि में पड़े तो लग्नादि क्रमसे बारह राशियों की नवांश दशा होती है । जन्म लग्न सम राशि में पड़े तो सप्तमादि क्रमसे

बारह राशियों की नवांश दशा होती है। इस नवांश दशा में प्रत्येक राशि के दशा मान नव नव वर्ष के होते हैं। इस लिये इस का नवांश दशा संज्ञा है। यहां आदर्श शब्दका अर्थ सप्तम राशि है। "स्थिर राशि का चर, चर राशि का अष्टम राशि, और द्विस्वभाव राशि का सप्तम राशि सम्मुख होता है। ऐसा पर्योंने कहा है सो दृष्टि विचार के लिये है। यहां के लिये संगत नहीं है। ऐसा ( नीलकण्ठ ने ) कहा है। इस तरह नीलकण्ठ के अर्थ में तथा अन्य पुस्तक में भी आदर्श पद से सप्तम राशि को ग्रहण करके व्याख्यान किया है सो समीचीन नहीं है। इस पर पण्डित लोग विचार करें ॥ १-२ ॥

उदाहरण—यहां पर जन्म लग्न=८।१८।२१।२३ को विषम राशि में होने के कारण लग्नादि क्रमसे बारह राशियों की नवांश दशा हुई।

अथ स्फुटार्थं नवांशदशाचक्रम्—

| भावाः | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| व. | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ |
| मा. | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| दि. | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| द. | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| प. | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| सम्वत् | सं. | सं. | सं. | सं. | सं. | सं. | सं | सं. | सं. | सं. | सं | सं. |
| १९६५ | १९७४ | १९८३ | १९९२ | २००१ | २०१० | २०१९ | २०२८ | २०३७ | २०४६ | २०५५ | २०६४ | २०७३ |
| सूर्यः | सू. | सू. | सू. | सू. | सू. | सू. | सू. | सू. | सू. | सू. | सू. | सू. |
| रा. | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ |
| अं. | १५ | ५ | १५ | १५ | १५ | १५ | १५ | १५ | १५ | १५ | १५ | १५ |
| क. | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ |
| वि. | ३१ | ३१ | ३१ | ३१ | ३१ | ३१ | ३१ | ११ | ३१ | ३१ | ११ | ३१ |

